தால் ப்ரபந்நதி3நசர்யாநுஸந்த4ாநாநுஷ்ட2ாநவிவரணமும், அநுஸந்த4ாத்ருகு3ணவ்ருத்3த்4யநு-கு3ணாநுஷ்ட2ாநசரமகைங்கர்யஶோத4நமும், தத்பூர்வத3ஶாவிஶேஷோஜ்ஜ்வலஸ்வரூபதத்3கு3ணவிஶேஷமும், ததி3தரகு3ணவிஷயநிஷித்3த4விஶேஷதே3ாஷமும் சொல்லப்பட்டது. (307)

---

உபாயோபயோதி4காரப்ரத4ாநாபேக்ஷிதங்களையும், ப்ராபகாந்தரபரித்யாக3ஹேதுவான ஸ்வரூபநாஶகத்வாதி3யையும், ப்ரபத்தியின் ஸ்வரூபாநுகூலத்வாதி3யையும், ஸ்வக3தஸ்வீகாரா-நுபாயத்வத்தையும், பரக3தஸ்வீகாரோபாயத்வத்தையும், தத்ப்ராப3ல்யத்தையும், அவனே ஸ்வீகரிக்குமிடத்திலும் புருஷகாரத்தை முன்னிடும்படியையும், உப4யரும் முன்னிடுமதுக்கு ப்ரயோஜநவிஶேஷங்களையும், உபேயத3ஶையிலும் ப்ராப்தித3ஶையிலும் இவன் ஶேஷத்வ-பாரதந்த்ர்யங்களும் ஸ்வதே3ாஷநிவ்ருத்தியும் பராநுப4வவிரோதி4யாம்படியையும், தன்னால் வரும் நன்மை அவனால் வரும் நன்மைக்குமுள்ள வாசியையும், ஈஶ்வரனே ரக்ஷகன், தான் தனக்கு நாஶகனென்னுமத்தையும், தன்னைத்தான் நஶிப்பிக்கும் ப்ரகாரத்தையும், அஹங்காரமும் விஷயங்களும் ஸ்வரூபேணவும் ப4ாக3வதவிரோத4த்தை விளைத்தும் இவன் ஸ்வரூபத்தை நஶிப்பிக்கும் படியையும், ப4ாக3வதாபசாரக்ரௌர்யத்தையும், தத்ப்ரஸங்க3த்திலே ப4ாக3வத-மாஹாத்ம்யத்தையும், இவன்தி3நசர்யையும், தி3நசர்யோக்தங்களடைய ஸதா3சார்யப்ரஸாத3த்-தாலே வர்த்தி4க்கும்போதைக்கு அபேக்ஷிதமான வஸ்தவ்யாதி3யையும், தச்சரமோக்தகர்த்தவ்ய-ரூபகைங்கர்யவேஷத்தையும், கைங்கர்யதத்பூர்வத3ஶைகளில் ஸ்வரூபத்தை உஜ்ஜ்வலமாக்கும் படியையும், இவனுக்குண்டான கு3ணசதுஷ்டயத்தையும், தத்3விஷயவிப4ாக3த்தையும், அதில் அஶக்திவிஷயநிஷித்3த4சாதுர்வித்4யத்தையும் சொல்லுகையாலே அதி4காரிநிஷ்ட2ாக்ரமம் சொல்லப்பட்டது. (307)

ஒன்பது ப்ரகரணங்களில் ஐந்தாமதான ப்ரபந்நதி3நசர்யாப்ரகரணம் ஸம்பூர்ணம்

ஆறு ப்ரகரணங்களில் மூன்றுமதான அதி4காரிநிஷ்ட2ாப்ரகரணம் ஸம்பூர்ணம்

ஆய் ஜநந்யாசார்யர் திருவடிகளே ஶரணம்

பெரியஜீயர் திருவடிகளே ஶரணம்

அண்ணாவப்பங்கார் திருவடிகளே ஶரணம்

# श्रीवचनभूषणकारिका

प्राप्याभिकार्यप्रकृत इति शङ्का व्युदस्यते । व्याख्येयद्वयमन्त्रस्य सूच्यते चोत्तमेन सः ॥ 1 ॥
सिद्धोपायस्य सहकार्युपकार्यनपेक्षणात् । परिशिष्टोधिकारोत्र काङ्क्षितस्स्यात्तदुच्यते ॥ 2 ॥
उपायनैरपेक्ष्यावसायः शक्त्यादिहापकः । शक्ता सीता, द्रुपदजा शक्तिहीना, यतस्ततः ॥ 3 ॥
जहतुः शक्तिलज्जे ते तदेकोपायतेच्छया । भर्तृष्वेकपरा तेभ्यः प्राङ्मृता कर्णकामिनी ॥ 4 ॥
कृष्णा, पतिव्रताशक्तिविहीनेत्यपि सिद्ध्यति ॥ 5 ॥
नश्येत् स्वरूपं पतिपारतन्त्र्यं इत्युपेक्षतस्त्यावनमात्मशक्तिः ।
नित्याग्र्यधीस्सा ;परमापदित्वियं त्रपामनादृत्य जहौ करद्वयम् ॥ 6 ॥
दुष्करतमन्त्विदं; यत् कृत्यं श्रीकण्णमङ्गैयान् त्यक्त्वा, ।
स्वाम्यभिमत्यनुमित्या शेते श्रितजीविताऽऽलयद्वारे ॥ 7 ॥
अथोपेयाधिकार्यग्र्यः क्षुधातुर-नयानुगः । {"क्षुधातुराणां न रुचिर्न पक्वम्" என்னக்கடவதிறே; "फलं तोयं अश्नामि" என்று போ₄ஜ்ய-பேய-விப₄ாக₃மற விநியோக₃ம் கொள்ளும்படியிறே ப₄க்த்யுபஹ்ருதத்₃ரவ்யத்தில் மோஹியின் பாரிப்பும்} व्यजिज्ञपद्वियोगे स्वसत्ताहानिं निदर्शयन् ॥8॥
दास्यं कुर्यां ; अशेषेण कुर्यां सर्वत्र सर्वदा । नियोज्यपरवन्तं मां नित्यं स्वीकुरु भो इति ॥ 9॥
एत्यायोध्यां, विना भार्गं समैर्दास्ये वने यथा । बुभूषुस्सर्वकृद्भ्रेजे छत्रचामरतस्समम् ॥ 10 ॥

स्वयम्पाकीव पङ्क्त्यन्तिं असहन् दास्यभागिताम् । रामायणे कथेयं न युद्धकाण्डे; न सङ्गता ॥ 11
अयोध्याकाण्डवार्ताटव्याप्तेः प्राग्वृत्तगायतः । साद्दश्योह्योयमरोत्र स्पष्टहर्मोक्तिनिश्चितः ॥ 12
छत्रचामरतो दास्यं वनाप्तेः प्रागपि व्यधात् । योयं वनस्थदास्येच्छः पश्चाद्दास्यं तथा विना ॥13
न स्यादित्यर्पणायास्मै शत्रुघ्नश्छत्रमादधे । श्रीजटायुमहाराजः पत्युः पितृसखस्सुहृत् ॥ 14 ॥
रावणो मां हरत्यार्येत्यार्त्योक्तस्सीतया बली । सीतार्थं रक्षसाऽयुद्ध तेन वीरो रणे हतः ॥15॥
आपन्नारायणं वह्नेर्नैरियूर्गायकस्सुतैः । ससुतो दग्धदेहोभूच्चिन्तयन्ती त्वयत्नतः ॥ 16 ॥
निरुच्छ्वासाभवन्मुक्ता विश्लेषसहनाक्षमा । उत्कोपमात्मनां निष्ठा दर्शयन्तीनुगवित्तये ॥ 17 ॥
अधिकारी गतौ शक्ति-ह्री-यत्न-त्यागः, एष तु । गम्ये, प्रेम-स्वकोपेक्षा-विरहासहतात्मकः ॥18
विधिं स्मरन् अनुष्ठाता विहितत्यजनक्षमः । स्यात् प्रपत्तेश्च्युतिभिया; प्राप्तरागवशस्तु यः ॥19
प्रपन्नोपि कथं तिष्ठेत् प्राप्तौ यत्नान्निवर्तितुम् । कर्मैवं नरैयूर्गात्रा सायुज्ये भक्तिवद्गतिः ॥20

यत्तत्कृतं प्रपन्नेनेत्यदोषारोपसम्भवः । कैवल्यखिन्ने भगवत्समभोक्तव्यशालिनि ॥ 21 ॥
उत्कटेनुत्कटे रागे दुस्त्यजं सुत्यजं क्रमात् । अधिकारभिदा वैधे त्याज्यतापादिनी ह्यतः ॥ 22
देहत्यागनिषेधोनुवर्त्योनुत्कटरागिणा । विरहावहनेन्यस्मिन् देहत्यागस्स्वयं फलम् ॥ 23 ॥
यद्वा हरिं गतिं ध्यायन् स्वयत्नाद्विनिवर्त्तते । गम्यं स्मरंस्तमेवासाववशस्स्यात् स्वयत्नवान् ॥ 24
शक्तिह्रीयत्नवत्त्यागो देहस्यापि न युज्यते । देहत्याग उपायत्वं शास्त्रोक्तं हीति चेन्न तत् ॥ 25
शक्त्यादित्यजनं प्रेमाद्यन्वयश्च क्रमाद्यथा । गतिगम्याधिकारेन्तः प्रविष्टे न ततो गती ॥ 26 ॥

विरुद्धाचरणे चैवं गतिकोट्यन्वयो न हि । प्रयोक्तृध्यनुगं ह्यत्र फलं, नापथ्यभुक्तिवत् ॥ २७
गतित्वेपि न हानिस्स्यात् प्रेमकारितवृत्तिषु । काम्यकर्मसमाचारो, विरहे स्ववधोद्यमः ॥ २८ ॥
इत्याद्यनन्यगतिता हानिकारीव भाति यत् । स्वानन्दालङ्कृतिमुखस्वगतातिशयार्जने ॥ २९ ॥
प्रवृत्त्यानन्यगम्यत्वहानिसंशयकृच्च यत् । नतिश्च कामदेवादेर्दैवान्तरगमोपमा ॥ ३० ॥
उपायबुद्ध्या रहितं सहितं वापि यत्कृतम् । प्रेमायत्तमतो नासदिति सिद्ध्यति निर्णयः ॥ ३१ ॥
शठजित्कलिजिद्गोदावृत्तात्; धीपाकजा हि सा । प्राप्ताप्राप्तविवेकस्य हानिस्तत्कारितं च यत् ॥
सर्वं श्लाघ्यतमं, किन्तु हेयं कर्मनिबन्धनम् । ईशो विशेषसङ्कल्पोत्पादितद्धितभक्तिजा ॥ ३३ ॥
साध्यसाम्यविलम्बाभ्यां, साध्ये प्रावण्यतश्च हि । सिद्धगत्याश्रयस्तद्धि तुल्यमासु प्रवृत्तिषु ॥ ३४
तस्मात् सिद्धगतेस्साम्यं चासु सिध्यति सर्वथा । शेष्यलाभार्तिजो यत्नो दास्यरूपाप्यवत् प्रियः ॥
शेषिणोतिशयाधानात् हेतुश्चास्य द्रुतागमे । प्राप्यप्रीतिकृतत्वे च सिद्धगत्याश्रयोपमः ॥ ३६ ॥
गम्याभेदाद्रतेर्वाथ सारस्येस्ति हि तुल्यता । तत आशुफलित्वाच्च सिद्धगत्यग्रयता मता ॥ ३७
तत्रालस्यासहर्षाशाकृतं तद्बाधकं न हि । गम्याधिकृत्कृतेनन्यगतित्वाहानिरीरिता ॥ ३८ ॥
गतिगम्याधिकारेथ गम्ये हैव प्रयोजिका । गम्याधिकृद्विशेषेतिवृत्तिवच्छन्नताप्यगे ॥ ३९ ॥
इतीर्यत इतीर्यते प्राक्-पश्चात्-वाक्यसङ्गती । योगोनुकूलैरित्यादेरात्मर्द्धिदगुणादपि ॥ ४० ॥

शीघ्रं कार्यकरी हेयं कार्योत्कर्षकरी परा । ऐश्वर्यात्माप्तिरासिक्यात् परं दृष्ट्वा निवर्तते ॥ ४१
चेतनो महदाह्लोक्तेः बार्हस्पत्यस्मृतेस्तथा । द्रमिडोपनिषत्सूक्त्याप्यर्थोयं विशदीकृतः ॥ ४२ ॥
सर्वात्मगुणदेशेहात्वन्यानीहोत्तमो गुणः । ईश ईहाततोत्रोक्ता हेतुश्शमदमोद्भवे ॥ ४३ ॥
शमश्चित्तप्रशान्तिस्स्याद्दमश्चेन्द्रियनिग्रहः । रागकृद्धीकृतक्षोपरोधजाविरतिर्यतः ॥ ४४ ॥
शमाद्यभिन्नं वैराग्यं न चेत् तर्हिंचुपलक्षणम् । सर्वात्मगुणराशेः प्राक् चोपलक्ष्यं शमादिकम् ॥
शमादिपूर्तिरीशेहालभ्योक्ताथ त्विदं शृणु । शमाद्यङ्कुरवच्छिष्यं गुरुस्स्वीकुरुते कृपी ॥ ४६ ॥
भवापहमनुं सार्थं शिष्यवश्यः प्रदित्सति । शान्तिदान्तिमते ब्रह्मविद्या वाच्येति हि श्रुतम् ॥ ४७
सिद्धमाचार्यकं रागात् प्रोवाचेति विधीयते । पक्षतोप्राप्तिविषये प्रापणार्थमिति स्थितम् ॥ ४८ ॥
{अतोऽयं "स्नात्वा भुञ्जीत" इतिवन्नियमविधिः; न तु, "अहरहस्सन्ध्यामुपासीत" इतिवदपूर्वविधिः; नापि, "ऋतावुपेयात्" इतिवत् परिसंख्याविधिः; रागप्राप्तभोजनस्य स्नानपूर्वकत्वं विनापि क्वचित्संभाव्यत्वात्, तादृशसम्भवपक्षेपि यथा स्नानपूर्वकत्वं नियम्यते, तथा, शमदमाद्यात्मगुणलेशयुक्ताधिकारिणा आचार्योपसत्तौ कृतायां आचार्यस्य रागत उपदेशे प्रवृत्त्यप्राप्तिपक्षेपि उपदेशे प्रवृत्तिर्नियम्यते । "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र चाप्राप्तौ परिसंख्या विधीयते" इति हि न्यायविदः । }

न निरूपणतः प्राक् स्युर्निरूपणभवा गुणाः । गुरूपसत्तेः प्राक् पश्चात् शमाद्याव्यक्तितः पृथक् ॥
गुरौ वश्ये मनुस्सार्थं स्याच्छिष्ये हृत्प्रतिष्ठितः । हृत्प्रतिष्ठितमन्त्रार्थनुवशेट्स्यात्तदिष्टतः ॥ ५०
हेतुपूर्वककार्योक्तिः कार्यपूर्वकहेतुवाक् । इत्यारोहावरोहोक्त्योराद्योक्त्या स्थाप्यतेन्यथा ॥ ५१
शमाद्यावश्यकत्वाप्त्यै प्राप्ये त्वीडेवसाधनम् । शमाद्यपेक्षास्त्यासिद्धेर्भोगेच्छोर्मोक्षकाङ्क्षिणोः ॥५२
उपास्तिकर्त्रोर्विद्याङ्गं शमादिर्न्यास्यतिक्रिया । सिद्धोपायफलेत्युक्त्वा शोध्यते शरणागतिः ॥ ५३
ऊर्ध्वरेतोधिकर्तव्या सद्विद्यादिविलक्षणा । एषेष्टा चेद्वचोयुक्ती कृप्येतां प्रव्रजेत् इति ॥ ५४ ॥

श्रुतेस्त्यागृहिणो न स्याल्लोकशास्त्रामतस्तु तत् । विहितारक्त आर्तो हि दृप्तो नेदृग्विरक्तिमान् ॥
सर्वकामान् इति वचः कामानामुष्मिकान् वदेत् । इति चेन्न यतस्त्याज्याः कामाधर्मा इवाखिले ॥
प्रागुक्त चैहिकं सर्वैस्त्वैहिकामुष्मिकोभयम् । दृप्तैश्चार्तैरिव त्याज्यं स्यादिष्टयाथापि गेहिता ॥
ध्यानिन्यासिप्रपन्नेषु वैराग्यर्थः परः परः । प्रव्राट्समोन्त्यो भिक्षार्हो धर्मार्थाङ्गी ह्यभुक्तहा ॥58
श्रेष्ठोजगरवृत्तेस्सन्त्यज्य दारान् विधिं चरेत् । नापघतिक्रमेप्येष शास्त्रार्थो भज्यते क्वचित् ॥
आचार्याणां तु पुंस्त्वे, तेजीयस्त्वनयार्द्गतिः । शान्तिः प्रपन्ने मुख्येति वक्तुं ह्यन्याधिकृद्वचः ॥
निषिद्धपरदाराद्य ईहौ भोगार्थ्युपासिनौ । स्वस्वविद्यानुगौ त्वत्र धर्मबुद्ध्या स्वदारगौ ॥ 61 ॥
प्रपन्नेनन्यगम्ये स्वदारेहापि विरुद्ध्यते । धर्मबुद्ध्याप्यलङ्गोक्तिर्युज्यते भोग्यधीक्षये ॥ 62 ॥
स्वदारादिष्वनीहाप्तिर्भक्तजाप्यङ्गगाक्रमात् । सौन्दर्यकरुणाचारैर्हरेर्मुख्यतया भवेत् ॥ 63 ॥
देवतान्तरशेषा हि वर्णित्वान्न्यास्युपासिनौ । न्यासोपास्तिगती एवं न हर्येकगती अपि ॥ 64 ॥
स्वदारगौ न हर्येकभोग्यौ न्याकारहानिगौ । नित्यकर्मा प्रपन्नस्तु न वर्णित्वादियोगदः ॥ 65 ॥
सिद्धोपायैकनिष्ठोसौ नानन्यगतिताच्युतः । स्वदारसङ्गमं चासौ त्यजन् हर्येकभोग्यवान् ॥ 66 ॥
दृप्तो नैवं त्रिधर्मा चेन्निष्ठाभावात् फलात् स्रवेत् । शरणागतधर्मस्य शिक्षा रामावतारतः ॥ 67
मर्यादानां च लोकस्येत्यादौ मुख्यविवक्षिता । अनन्यधीदं सौन्दर्यं अनन्यरुचिदा कृपा ॥ 68 ॥
(अत्र धियो वा, रुचेर्वा अनन्यत्वं नाम "भक्त्या लभ्यस्त्वनन्यया" (गी.8-22), "भक्त्या त्वनन्यया" (गी.11-54) इत्याद्युक्तभक्तेरिव अनन्यविषयत्वमेव )

अनर्थभीद आचारो हर्येकैहेत्यतस्त्रिधा । त्र्यात्मकत्वात्तु भूयस्त्वात् प्रपत्त्यरतिहेतुवाक् ॥ 69
फलाद्यङ्गं च भक्तेक्ष्यं अर्चाङ्गैकदृशौ परौ । अर्चाङ्गेजम्रदज्ञानी कादाचित्कदृशित्वधीः ॥ 70 ॥
दृष्टरामग्र्यधीभीदा कृपाजास्त्र्यङ्गदोषधीः । ज्ञाज्ञारक्त्यग्र्यहेतुस्तु कृपाजानर्हतामतिः ॥ 71 ॥
तदभावाद्विरिञ्चादिदोषज्ञोपि स्वदारगः । प्राप्तत्वधीश्शठार्यादिः ईट्परो दोषदर्श्यपि ॥ 72 ॥
{दोषदर्शित्वम् - स्वभोग्य-परमशेषि-विषये}
कृपाजारुचिदाप्राप्तिदोषबुद्ध्योर्वराघधीः । दोषधीगौणहेतुत्वं हेत्वाभासत्वमेव हि ॥ 73 ॥
अप्राप्तिध्यग्र्यहेतुत्वं हेतुवाङ्मुख्यभोग्यता । नेडेहागुणधीजा, नान्यानीहा दोषधीभया ॥ 74 ॥
प्राप्त्यप्राप्तिधियेशीही द्वेष्यतस्मिंश्च तत्त्ववित् । ईशीहागुणधीजान्यानीहा दोषधियेत्यसत् ॥ 75
{ईशि + ईही = परमात्मनि ...रक्तः ; अ-तस्मिन्-द्वेषी – तद्विरुद्धे द्वेषी – रुचि-विपरीत-द्वेष-वान् – विरक्तः अपरमात्मनि}
गुणध्यसत्त्वेपीशीष्टेर्भवेष्टेर्दोषदृश्यपि । व्यतिरेकान्वयव्याप्त्योर्हेतुभग्नाविमौ क्रमात् ॥ 76 ॥

दुःखयुक्सुखभोगे, सं-सारवाग्योगरूढिका । संसारः प्राप्तधीजोयाज्ञानिव्रजननादिकः ॥ 77 ॥
ईट्स्वीकारेतरत्यागौ प्राप्त्यप्राप्तिधियेति सत् । तथास्मिन् गुणहीनेपि नान्यविद्हृन्ममादयम् ॥
निम्बवद्विरसत्त्वेपि सर्वाधिकरसस्यते । त्वदनन्यार्हशेषोहं, त्वद्दिव्याङ्घ्र्यन्यनिस्स्पृहः ॥ 79 ॥
ईट्कृपाप्ताच्छधीभक्तिसूर्युक्तिहर्येवमादिका । भक्त्यादाविव वृत्तौ च न्यास्याद्यग्र्यः प्रपत्तिमान् ॥
गौणं गुणधिया दास्यं गुणैर्दास्यमुपागतः । इत्यत्राप्युपशब्दं हि शेषोनुपधिरुक्तवान् ॥ 81 ॥

उत्तम्भकवाद्रीणं नोत्तम्भ्यानुपधिदास्यवत् । गुणाधिकपतिं दिष्ट्या लब्ध्वा सीतेनुगच्छसि ॥ 82
इत्युक्तिं ह्यनसूयायास्सहीस्सीता निराकरोत् । प्राक्स्थो नानन्यथासिद्धो ह्यनुवर्त्यमदीड्गुणः ॥
तदज्ञलोका ईड्दास्यं मन्यन्ते गुणधीभवम् । सोवृत्तश्चेत्तथात्वेमदनन्यत्वं भवेत् स्फुटम् ॥ 84
सुवृत्तेस्मिन्ननन्यत्वं ममोक्त्यर्हं हि नो इति । दास्यं प्राप्तिधियाग्र्यं चेत् सूर्यन्यगतिता कथम् ॥
इत्यसङ्गत्यं यदत्यन्तस्नेहादेषोपपद्यते । सत्ताव्यापकशेषत्वसम्बन्धज्ञो न जित्वतः ॥ 86 ॥
निरुपाधिक एवैष स्नेहो, नैव गुणोपधिः । स्नेहजानुभवालाभे नश्येत् सत्तापि शाश्वती ॥ 87
अपि चेदविनाश्येयं अचिन्नाशकवह्निना । स्यादेव दाह्यता तस्याः प्रियविश्लेषवह्निना ॥ 88 ॥
अस्या अहोन्वै सत्तायाः भवेद्यद्यदपेक्षितम् । तदुस्त्यजं, पतीष्ट्यार्हं ;अतोन्यगतितादि सत् ॥89
आख्यातेषु ब्रुवत्स्वर्थं शक्तिर्हि सहकारिणी । प्राणात्ययेर्हं सर्वान्नं, नातिभक्तस्य शास्त्रिता ॥ 90
नरस्य बुद्धिदौर्बल्यात् या हि गत्यन्तराश्रितिः । सैवेडनिष्टातीष्टा तु या भक्त्यतिशयोद्भवा ॥91
इतीडनिष्टेनीहैव शरणागतियोग्यता ॥ 92 ॥

प्रपत्तीतरकर्मादिगतित्यागेपि नाग्रगः । हेतुर्ग्राहिध्यनुष्ठानशक्त्यभावोपि तु ह्ययम् ॥ 93 ॥
नात्यन्तेट्परतन्त्रोर्होनिष्टयत्न इति ग्रहः । राड्भृत्यः परतन्त्रोतिपरतन्त्र उपासकः ॥ 94 ॥
अत्यन्तपरतन्त्रोग्र्यः प्रपन्नः साभिधा गतौ । कर्मेट्कृपाजस्वकृतीड्जाखिलत्वधियां फलम् ॥
इति वक्ति नमोव्याख्या मां व्रजान्यांस्त्यजेति वाक् । उतमत्वादिनैकान्तिपरमैकान्तिभेदिवाक् ॥
प्रारब्धनाशानाशोक्तिर्बन्धूलारेरणादिका । {नार्हन्ति शरणस्थस्येत्यादिवाक्चात्र सूचिता । मामेवैष्यस्यहं मोक्षयिष्यामीतीट्-स्फुटेरणा ॥ येन त्वं बत संरब्ध उद्धरिष्यामीति तान् स्वयम् । पूर्वे त्रय उपायास्स्युरेतन्निष्ठार्यविप्रियाः - इतीरणा } चित्स्वरूपविरोधोक्तिस्स्वरूपानर्हतापरा ॥ 97 ॥
गत्यन्तरे, ह्यसन्नेयेत्यज्ञनिन्दापरोक्तिवत् । गत्यन्तरोज्झितिर्गौणी ह्यध्यशक्तिकृता ततः ॥98
अध्यशक्त्योज्झितस्य स्याद्धीशक्त्याप्तौ पुनर्ग्रहः । न पुनर्गृह्यते तत्तु यत्रानर्हत्वनिश्चयः ॥ 99
प्राक् पश्चाद्वा प्रपत्तेर्न यत्न्यात्मेत्यंशपञ्चके । उक्त्वाथ भक्तौ न्यासे चागतिता स्थाप्यते त्रिभिः ॥

भक्त्यसाधारणा दोषा न्यासासाधारणा सतः । द्वयोस्साधारणाः पश्चान्मेयाः प्रकरणक्रमात् ॥
ईडादत्ते चिदचितौ सत्ताद्यैस्स्वार्थमित्यतः । सोपधिस्साधने कर्ता ; ज्ञानी कर्ता तु मुक्तवत् ॥
निर्व्यापारत्व-तुच्छत्या-प्रसक्त्यात्मन्यतस्थिरम् । ईडेककारितं दास्यं, तदर्थैकप्रयोजनम् ॥ 103
चित्कर्तृत्वेपि पारार्थ्यं पुष्पगन्धे यथेत्यतः । नयत्निफल्युपास्यादौ पारतन्त्र्य-परार्थते ॥ 104
स्वयत्नमुख्यफलिता स्वीयकर्तृत्वमुख्यते । नयत्निफलितेन्येस्यान्न्यासोपासाधिकृत् त्यजन् ॥ 105
साधकोखिलकृत्स्वार्थं नेडर्थाखिलकृत्समः । स्वामी स्वीयं स्वयं पाति तत्तस्य सदृशं ततः ॥106
शेषत्वपारतन्त्र्यजं साधनित्वं, अथास्य च । स्वयं तु रुचिरे देशेत्यगम्यार्हतोदिता ॥ 107 ॥
शास्त्रार्थानुष्ठितत्वेपि सारार्यैरननुष्ठितेः । न कलौ साधनन्यासोपास्त्योर्गुरुमुखागमः ॥ 108 ॥
दशो नोपासिजिन्न्यासी प्रपन्नावरः फले । अत्यन्तपरतन्त्रस्य रूपोहं हीडपेक्षया ॥ 109 ॥
स्वरक्षायत्नगन्धोस्मान्मत्स्वरूपविरूपकः । इति श्रीसदसद्भावावन्यगत्युज्झितीषिदौ ॥ 110 ॥
कर्मज्ञानादयश्शास्त्रैरुपायत्वेन दर्शिताः । हिंसास्तेयादिकेपायहेतुतापाय उच्यते ॥ 111 ॥

अपायो ध्वंसविश्लेषोभयरूपो विवक्षितः । अत्यन्तेडीषितात्यन्त-पारतन्त्र्यस्वरूपहा ॥ 112 ॥
तदिष्टिहृतिजोपेक्षारूपविश्लेषकृच्च सः । स्वरूपघ्नत्वनियत-भी-शुक्-सिद्धाह्यपायता ॥ 113
विहितेत्यनुरूपान्यगतिरित्यनुमां व्रति । धीशोकौ योग्यतारूपकालादौ चाङ्गिवस्तुनि ॥ 114 ॥
आगाम्यतीतानर्थानां ज्ञानात् संभवतः क्रमात् । जिताक्षार्जुनशुक् स्यान्न दुष्करत्वनिबन्धना ॥
वधप्रसक्तिजा शुक् तु विश्वरूपदर्शेर्गता । ईट्-शरीर-स्वरूपस्य नान्यगत्यर्हतेति शुक् ॥ 116
आमवृत्तेति सा ह्येव चरमश्लोकवारिता । स्वरूपघ्नतयैवैतत् प्रवृत्तौ निष्क्रियोदिता ॥ 117 ॥
स्वरूपानवधृत्यैव ह्यन्योपाये गतिभ्रमः । अपायान्वयिनीवाथ उपायान्वयि निष्कृतिः ॥ 118 ॥
पारतन्त्र्यं चितो नैजमनैश्वर्यात् स्वभावजात् । नाशक्तिहेतुकत्यागानुक्तिर्गीतान्तिमोक्तितः ॥ 119
निरयः फलरोधोर्वाक्फलं वा नान्यसाधनात् । ईड्विशिष्टेष्टिहान्यैव निष्ठाहानिरतो गता ॥
पुनः प्रपत्तेर्युक्त्यै प्राक् प्रपत्तिस्मृतितोचिता । प्रारब्धघ्नप्रपत्तिर्हि पादुकार्यैर्गुरोश्श्रुता ॥ 121 ॥
ह्यप्तार्तोभयशुग्घ्नी सा तत्तच्छोच्याखिलोद्धृतेः । धीपूर्वभाव्यघं चेण्मेक्षमस्वेत्यप्यतोर्थ्य ईट् ॥

{अयमर्थः -

(1) "साध्यभक्तिस्तु सा (= आर्तप्रपत्तिस्सा ) हन्त्री प्रारब्धस्यापि भूयसी" (ल.त.)
(2) "कृतानहरहर्मया । अपचारान् इमान् सर्वान् क्षमस्व" (जि. स्तो.20)
(3) "कालेष्वपि च सर्वेषु ... वर्तते मे तहद्भयम्" (जि. स्तो. 9)
(4) "अज्ञानात् अथवा ज्ञानात् अपराधेषु सत्स्वपि । प्रायश्चित्तं क्षमस्वेति प्रार्थनैकैव केवलम्" (र.सारे 25)
(5) "अरिः प्राणान् परित्यज्य रक्षितव्यः" (श्रीरा.यु. 18-28)
(6) "रिपूणामपि वत्सलः" (श्रीरा.)
(7) "हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः" (हर्यष्टके)
(8) "वद किमपदमागः तस्य तेस्ति क्षमायाः" (स्तो. र. 63)
(9) "जानामि धर्मं न च मे प्रवृत्तिः"
(10) "अवबोधितवान्" (स्तो.र. 54)
(11) "नाम्नोस्ति यावती शक्तिः पापनिर्हरणे हरेः । तावत् कर्तुं न शक्नोति पातकं पातकी जनः"
(12) "हरेर्नामैव नामैव नामैव मम भेषजम्"
(13) "कैयार् शक्करत्तु" (तिरुवाय्मोऴि 5-1-1)
(14) "वाडिनेन्" (पेरियतिरुमोऴि 1-1-1)
(15) "नैवास्य प्रतिषेधाय पातकम् ..."

(a) इत्यादिवचनैः तत्र (b) उक्तैः (c) सूचितैः न्यायैश्च स्वतः कैमुत्यविधया च सिद्ध्यति}
संशये निश्चये वाघभूतभावित्वयोरिदम् । 'तस्मात्प्रमादाद्बुद्ध्या वा' (प्रपन्नपारि.) इत्यधीजागं हृतं यया
सा प्राक्प्रपत्तिरेकैवधीजाघघ्न्यपि हीरिता । धीपूर्वभाव्यघं मास्तु इत्यग्र एवार्थनेक्ष्यते ॥ 124 ॥
तमंशं नैव कुर्वीत इत्यघवत्त्यजनिष्कृतिम् । कुरुकेडभियुक्तोक्ताह्यन्यगत्यत्यनिष्टता ॥ 125
मयाणुयुग्यथारौक्मकुम्भस्थं तीर्थवार्यघम् । अहङ्कारयुतं तद्वत्त्यन्तरमपीति नः ॥ 126 ॥
आत्मा ज्ञानमयः प्रोक्तस्स्वार्थे मयडपीप्सया । स्वतो निर्मल ईट्शेषः आत्मा भक्त्याश्रयश्शुचिः

तद्वतेण्णियताभक्तिश्चानहङ्कारिणी शुचि: । उपास्त्यङ्गानहङ्कार: स्वेष्टाय कृषिमान् कथम् ॥
इति चेन्न, परायत्त-गत्याप्त्यात्तस्वभोगभाक् । उपासी, तदहङ्कारलेशो बिन्दुपदोदित: ॥ 129
स्वकर्तृभोक्तृते मुख्ये नेति मात्राहद्युपासिधी: । यदीत्यध्याहरत्पक्षं सक्लृप्त्यैवं त्यजेत् सुधी: ॥
नाध्रुवान्यगतिर्नित्यमोक्षहेतुरसाम्यत: । दृष्टव्याप्तेश्श्रुतेश्चायं कर्मोपास्त्योर्नयस्समः ॥ 131॥
तपस्तप्यत इत्यादेरुपास्तिफलमन्त्यवत् । नायमात्मेति चेड्लाभो नोपास्त्येति स्फुटोदितम् ॥
वराटिकार्पणाद्दत्तं, राज्यं चैत्युपहारत: । त्रिधानन्तफलं चैति त्रिधाच्छिन्नगतेस्तथा ॥ 133 ॥
व्याजतान्यगतेरेवं युक्त्वा चरमयोदिता । पुरुषो बहुदातेतीड्भक्त्या लभ्यस्त्विति स्थले ॥ 134
वैषम्यार्थस्'तु'शब्दो,ऽस्माद्दतिरल्पा फलं बहु । यदीदृस्वयं नयेन्मोक्षं तत्तस्य सदृशं भवेत् ॥135
जीवैस्स्वयत्नान्मोक्षाप्तिर्न तथेति सतां मतम् । स्वार्थानुभूत्यर्थ्यज्ञोन्यगतिर्ज्ञानी तु नेरिता ॥136
गत्यन्तरैस्स्वरूपस्य विरोधागमरीतय: । नाशकत्वं, अयोग्यत्वं, नैष्फल्यानिष्टहेतुते, ॥ 137॥
विवेकपरिपन्थित्वं, तथाहङ्कारमिश्रता । औपाधिकत्वं, शेषत्व-पारतन्त्र्य-विरूपता, ॥ 138 ॥
ऐकान्त्यभञ्जकत्वञ्च, श्येनादिसमता तथा, । प्राहयननुगुणत्वञ्च, तथा पातककोटिता, ॥ 139
शिष्टापरिगृहीतत्वं, कलिधर्मबहिष्टता, । इत्येवं पञ्चदशधा विभज्यार्यैर्निरूपिता: ॥ 140 ॥

वराटिकार्पणाद्दत्तं राज्यं चैतोपहारत: । रत्नोपहारयोस्स्वामी ; नैवमप्यन्यसाधन: ॥ 141 ॥
गत्यन्तरं फलस्यातो न सदृङ्न च साधनम् । वाक्यव्याख्या समाप्तैवं सोर्थोतस्स्पष्टमुच्यते ॥
न मे स्वमीश नाहं मे त्वच्छरीरं ह्यहं सदा । वराटिकादिदो नैवं तत्स्वीकर्त्रेर्हतीरितुम् ॥143
अतो सदृग्व्याजतापि दृष्टान्तस्था, नलेर्पिते । त्वदर्चायै त्वया दत्तं करणाढ्यकलेबरम् ॥ 144
आचार्याय वरो देय इति वक्तेर्पयाम्यहम् । ध्यानार्चनप्रणामाद्यै: सर्वं त्वच्छेषतां नयन् ॥ 145
ईदृग्धीपूर्वके दान उपायत्वं न सिध्यति । दत्तप्रत्यर्पका: नात्र वैकुण्ठे वा फलार्थिन: ॥ 146
दत्तं मदीयं मन्ये चेत् श्येनत्वं स्यान्मयि स्फुटम् । विहितत्वाद्दत्तित्वानुमानं सत्प्रतिपक्षितम् ॥
भक्तेरुत्तमभोगत्वान्न गतिस्सेति किञ्च न: । शेषाणां परतन्त्राणां भर्तृभोगो न साधनम् ॥ 148
प्रयोजनान्तरार्थत्वध्वनर्हं यत्प्रयोजनम् । स्वयंप्रयोजनं तद्धि नेदृग्भक्तौ गतित्वधी: ॥ 149 ॥
सूरिभोगसदृग्भक्तिस्सेड्वैलक्षण्यधीभवा । अतोऽपुरुषतन्त्रा च न विधेया हि कर्मवत् ॥ 150॥
यावज्जीवं सुखं जीवेत् इतिवद्भक्तिचोदना । योगपर्यन्तयत्नस्य फलं भक्ति: फलं स्वयम् ॥151
निशायां पतिसंश्लिष्टा, प्रभाते चेतनार्थिनी । भार्येव, दूष्य आत्मा स्यात्, भक्तिं मन्येत चेद्गतिम्
इत्येवं कुरुकेशेनाप्यर्थोयं स्पष्टमीरित: । औषधाऽसेविवालेष्टवस्तुमिश्रौषधार्पणात् ॥ 153 ॥
तद्दुक्शमयितेवाप्तो वेदान्तो यत्नवासनात् । महाविश्वासहीनाङ्गांश्चावेतीङ्क्नयुक् स्मृते: ॥ 154
बालेष्टवस्तुरुग्-हृन्न, किन्तु तन्मिश्रितौषधम् । अशेषयत्नोपास्तिर्न किन्तु तन्मिश्रितेड्गति: ॥

मिश्रौषधेशौ फलदौ नाशु, साक्षाच्छ्रुतौ यथा । फलाव्यवहितापूर्वसाधनत्वात्मिकाऽङ्गिता ॥156
एतद्व्यवहितापूर्वसाधनत्वात्मिकाऽङ्गता । इत्युक्ताङ्गाङ्गिते, नात्र विवक्ष्येते हि तर्हि किम् ॥157
उत्पत्त्युपकृदङ्गं तूपकार्योत्पत्तिकेङ्गिता । यज्ञान्धादिशिशुत्यागेप्यक्षमाम्बेव वत्सला ॥ 158 ॥
शत्रुध्वंसादिमोक्षान्तपुमर्थान् साधनान्यपि । श्येनादिकप्रपत्त्यन्तान्युक्त्वा वेदोऽतिवत्सल: ॥ 159

अधोधोधिकृतः पक्वान् ऊर्ध्वोर्ध्वाधिकृतिं नयेत् । त्रैगुण्यविषयाद्वेदाज्जात्यन्धोपमतामसाः ॥160
राजसाः बधिरप्रख्याश्चाप्नुयुस्सात्विकश्रियम् । श्येनजे शास्त्रविश्वासे, काम्यकृत्स्यान्नरस्ततः ॥
धीश्श्येनविधिजा पूर्वा, काम्यविध्युदिता परा । श्येने प्राणिवधाच्छ्रेष्ठं काम्याङ्गं प्राणिमारणम् ॥
इति श्रेष्ठमपि श्येनात्, प्राज्ञैर्हिंसा-सदङ्मतम् । काम्याङ्गं मारणं; काम्य-त्यागायोपास्तिचोदना ॥
दुःखोद्देश्यकदुःखेष्टस्सद्य उद्यम एव तु, । उदर्केयोत्यनिष्टश्च, स हिंशाशब्दितोऽसा ॥ 164॥
शास्त्रोक्ता, भगवन्मात्रविषया,ऽपीतरा गतिः । ज्ञान्यपायो यथोक्तैवं, "काम्ये हिंसात्वमञ्जसा ॥
न हिंसातुल्यतामात्रं" इत्युत्कृष्टाधिकृन्मतम् । सर्वधर्मपरित्यागविधिश्शक्ताधिकृद्भवेत् ॥ 166
स्वयं त्यागे प्रवृत्तस्य अशक्तस्यैव कथं विधिः । प्रवर्तते ? ततो भक्तिरनिष्टफलदा भवेत् ॥
अमन्यमाने 'कृष्णोयं शरण्य' इति धर्मजे । राजसूयं कुर्वति, द्राक् तं प्राप्योपादिशद्यमः ॥168
'अथ पातक' इत्यादिनान्योपायं हि पातकम् । बुभुक्षूणामुपादेयं पुण्यं यद्वर्तते बहु, ॥ 169 ॥
तदेव हि मुमुक्षूणां 'पाप'शब्दार्थतां व्रजेत् । अतोत्र काम्यकर्माणि 'पाप'शब्दार्थतां ययुः ॥ 170

'श्येनेन' इत्यादिविहितोभिचारो विहितः पुरा । तमःप्रचुरनास्तिक्ययुक्तेभ्यस्तदनन्तरम् ॥ 171
आस्तिकाय च कारीरिकाम्यकर्मपराय च । निषिध्यते यथोपास्तिस्तथा च विहिता पुरा ॥172॥
सत्वव्याप्ताय शेषत्वयोग्याय, तदनन्तरम् । निषिध्यतेतिसत्वायतदेकगतिकाय हि ॥ 173 ॥
एतन्निषिद्धं कर्मैवाभिचारं, विहितं कुतः । इति चेच्छास्त्रविश्वासप्रयोजकतया भवेत् ॥ 174
विहितं नास्तिकानां हि शास्त्रास्तिक्यविरोधिनाम् । चेतनस्यान्यशेषत्वस्वातन्त्र्याक्रान्तचेतसः ॥
'स्वरूपयोग्यता मेतीट्छेषत्वं' इति च स्फुटम् । उपास्तिरेषाविहिता विश्वासोत्पादनाय हि ॥
विशिष्टवेषविद्विट् च, देहात्मभ्रमवत्कृतम्, । किञ्चिद्दुःखानुभूत्यैकफलकं, यत्तदीदृशम् ॥ 177
परहिंसारूपकं चाभिचारं, चर्मकर्शकम् । निष्कृष्टवेषविद्विट् च, स्वरूपज्ञानवत्कृतम् ॥ 178 ॥
ईडेकपरतन्त्रस्य स्वरूपस्य प्रणाशकम्, । उपासनमहङ्कारगर्भमेतत्तु मर्मकृट् ॥ 179 ॥
अत्यन्तपरतन्त्रस्य स्वरूपस्य विरोधि च । 'मर्मस्पर्शी' इति वाक्योक्तमिदं चैव ह्युपासनम् ॥
यथा यज्ञेन दानेन इत्यादिवाक्ये उदीरितम् ।तथा कायक्लेशकरकर्मसाध्यं यतस्ततः ॥ 181 ॥
अशक्तेनानेन कर्तुं न शक्यं न पूर्यते । एवं चान्योपायदोषोविस्तरेणोदितस्स्फुटम् ॥ 182 ॥
अस्मिन्प्रकरणे पूर्वमुक्तान्योपायदोषताः । ततः पश्चात् साप्युपास्तिः कष्टेत्युक्ता यतस्ततः ॥
काकमांसशुनोच्छिष्टं इति न्यायश्च सूचितः । अनिष्टफलदा भक्तिः, तत्रापि व्याजमात्रका ॥
व्याजमात्रापि न , तु किं दत्तदानस्वरूपका । प्रपत्तिशेषभूतत्वात् तथाभुता च नेत्यलम् ॥ 185

अष्टप्रकरणात्मके प्रथमपरिच्छेदे उपायान्तरदोषप्रकरणम् नाम षष्ठप्रकरणं संपुर्णम्

उक्तं षष्ठेऽगतित्वेन भक्तेः, ईङ्रक्षणस्य च । नैरपेक्ष्यं ; सप्तमे च प्रपत्तेस्तत्त्वमुच्यते ॥ 1 ॥
फलप्रपत्तिश्चात्रोक्ता व्यभिचारादसाधनम् । एवमन्योपायदोषा अनेकाः प्रतिपादिताः ॥ 2 ॥
प्रपत्त्युपायस्य तु न दोषोस्त्येकोपि सर्वदा । भक्त्युपाये ये च दोषा उक्ताः नात्र भवन्ति ते ॥ 3
दुष्टत्वं यदि भक्तेस्स्यात्, प्रपत्त्युत्तरभाविनी । यस्माद्भवति सा, तस्मात् प्रपत्तिश्च तथेति चेत् ॥

वेदान्तविहिता दुष्टा ;साध्या भक्तिरियं तु न । वेदान्ताविहिता भक्तिरियं, (1) अन्याऽप्रयोजना ॥
(2) द्रव्यादिनियमैर्हीना, (3) सर्वभक्तयङ्कुरा, तथा ।
(4) आशारूपा च, (5) सर्वाधिकारा इत्येव विलक्षणा ॥ 6 ॥
पूर्वोक्तदोषास्सन्त्यस्याः नेत्युक्तत्वात् प्रतीयते । 'उपायत्वाभाव इह वस्तुगत्या न यद्यपि ॥ 7 ॥
उपायप्रतिपत्त्यर्हा भवति' इत्यपि दूषणम् । एषा प्रपत्तिर्याथात्म्यज्ञानकार्या यदात्मनः ॥ 8 ॥
तत्, साधनप्रवृत्त्यर्हस्वतन्त्रप्रतियोगिनः । ईशीष्टपरतन्त्रस्य, स्वरूपस्योचिता मता ॥ 9 ॥
सुकरा च भवत्येषा स्वप्रवृत्तेरभावतः । आचार्यैः प्राग्भिरुक्तश्च 'प्रपत्तिरिति सा भवेत् ॥ 10 ॥
ईट्प्रवृत्तिविरोधिन्यास्स्वप्रवृत्तेर्विरोधिनी' । अपायत्वादिदोषाणां स्वरूपप्रतियोगिताम् ॥ 11 ॥
हेतूकृत्यागमाच्च, अस्याः फलसाम्यस्य दर्शनात्, ।
'उक्ता दोषाष्षडपि न सम्भवन्ति' इति साम्प्रतम् ॥ 12 ॥

'मोक्षार्थप्रीतिजनकं किञ्चित्कारं करोत्ययम् । न वा' इति चेच्चेतनस्य लघुत्वात्, ईश्वरस्य च ॥
अवाप्ताखिलकामत्वात्, देयमस्ति न किञ्चन । 'कथं भवति सन्तुष्टो भगवान्' इति चेत् 'अयम् ॥
पूर्वमन्योपायनिष्ठस्सदा भूत्वा ह्यनन्तरम् । मदेकगतिकोस्ति' इति तुष्टो भवति नान्यथा ॥ 15
"'अवाप्तसर्वकामस्य केश्वरस्य प्रतिक्रिया' । इत्युपायनिवृत्तोयं भवेत्" इति हि चेत्, अयम् ॥
'आभिमुख्यं गृहीत्वापि तुष्टस्स्यात्' इति संयतेत् । एवं सोत्यल्पसन्तुष्टः इत्येतस्यास्ति वा न वा
प्रमाणं, इति संशेतुस्संशयं मनसि स्फुटम् । कृत्वोक्तानि प्रमाणानि 'पत्रम्' इत्यादिकानि हि ॥
'पत्रादीन्यो ददात्यन्याप्रयोजनतया युतः । शुद्धयाहमाप्तनिखिलकामो गृह्णामि तन्मुदा ॥ 19 ॥
व्यामोहेन' इति भगवान् व्यक्तमाह किल स्वयम् । 'सन्धातुमिच्छोः कृष्णाय पाण्डवानां हितैषिणे
दत्वा राज्यं धनं किञ्चिद्वशीकुर्मस्तम्' इत्युत । धृतराष्ट्रे वदति, सः आह ज्ञानी हि सञ्जयः ॥
भगवान् भवता दत्तं धनं राज्यं च नेच्छति । किन्तु एतान्येव (1)यः पातुमाजहार जलं स्वयम्॥
तेन पूर्णस्य कुम्भस्य तद्गृहद्वारि संस्थितिम् । (2)गृहागतातिथेः पादावनेजनम् (3) अथापि च ॥
दूरान्मार्गादागतंप्रत्यादराद्बहुधाजनम् । 'अपि स्वागतमायुष्मन्' इति वाचं इति स्फुटम् ॥ 24॥
न घटेतानुकूल्यं तेल्पं वापि कुटिलस्य हि । शक्नोषि यदि वा कर्तुं तदेतानि कुरु स्वयम् ॥ 25

इति चाभ्यवदत्प्राज्ञस्सञ्जयो मुनिभिस्समः । सदा च सामभिस्तुत्य ईशो धूपैस्सुमैरपि ॥ 26 ॥
अल्पैर्वा पूजनीयोसौ नान्यत् श्लाघ्यमपेक्षते । इत्यत्यन्तविरक्तैश्च प्रोक्तं वकुलभूषणैः ॥ 27
वैलक्षण्यमथाप्येकं प्रपत्तेरुच्यतेधुना । तृणानि पोषकाः पूर्वं प्रदर्श्य पशवे ततः ॥ 28 ॥
आहूय तां गां तान्येव यथा ददति साम्प्रतम् । तथेश्वरः प्रदर्श्य स्वं आहूयेमं च चेतनम् ॥ 29
ददात्यात्मानमेवासौ विशिष्टगुणभूषितम् । फलसाधनयोरैक्यं नियतं भवति स्फुटम् ॥ 30 ॥
भगवन्तं वशीकृत्य पुराञ्जल्यादिभिस्ततः । क्रियन्ते यत्त एवाञ्जल्यादयः, फलसाधने ॥ 31 ॥
न भिन्ने तत्प्रपत्तिश्च सुखरूपा प्रकीर्त्यते । उच्यते (I) स्वगतस्यात्र स्वीकारस्यानुपायता ॥ 32
(II) उपायता परगतस्वीकारस्य च सम्प्रति । यदप्येवं पूर्वमुक्तं तथाप्यन्येन हेतुना ॥ 33 ॥
गृहीतु स्वं यथेच्छन्ति स्वामिनोत्र तथैव च । एवं स्वीकर्तुमुद्युक्ते ईश्वरे ; स्वेन कर्मणा ॥ 34

य इच्छति वशीकर्तुमीशं स विफली भवेत् । यदा गृहीतुमेनं च भगवानिच्छति स्वयम् ॥ 35 ॥
तदास्य परतन्त्रस्य बद्धेनांसि स्थितानि च । न तानि बन्धकानि स्युः मोक्षस्य प्रबलान्यपि ॥ 36
'स्वीकारस्स्वगतो हानिं, स एवेशगतः फलम्, । तनोति' इति स्फुटं लच्च दर्शितं भरते, गुहे ॥
तथाहि ;'भरतो मार्गे मनोरथपथानुगाम् । प्रपत्तेः फलनिष्पत्तिं चिन्तयन्नार्तिमांस्ततः ॥ 38 ॥
आसाद्य रामं संप्रार्थ्य पितुराज्ञानुवर्तिनम् । न लेभे फलम्' इत्येतद्वाल्मीकिमुनिनोदितम् ॥ 39
अङ्गवैकल्यमुख्यानां दोषाणां न हि सम्भवः । यतश्च भरते ज्ञानलोपादिर्न हि युज्यते ॥ 40 ॥
अन्यस्वीकारमाहात्म्याद्गुहे दोषा गुणीकृताः । गोत्वादिवन्न जातित्वं विद्यते पुण्यपापयोः ॥
किन्त्वीशितुः कृपाद्वेषजनकत्वं हि लक्षणम् । एवं प्रपञ्चितं सम्यगिदं श्रीवत्सलाञ्छनैः ॥ 42
विशिष्टवेषानुगुणां प्रपत्तिं भरतस्य हि । लोकापवादभीत्या तु कृतां रामो महामनाः ॥ 43 ॥
ननुतेस्मात्यनिष्टां स भक्त्युत्कर्षकृतामपि । गोपिकाभिः कृतास्सर्वे बहुधा गुर्वतिक्रमाः ॥ 44 ॥
रुच्याः बभूवुः कृष्णस्य यथात्रापि गुहस्य च । जन्मसिद्धाः क्रिया आसन् रामस्याभिमताः खलु

एतावता 'प्रपदनं शरण्यस्याप्रियं यदि । अपराधे प्रवृत्तं' स्यात् इत्युक्तं प्रागितः परम् ॥ 46 ॥
'इदं स्थितं पूर्ववृत्तेरपराधेनुमीयते' । इति स्फुटीकर्तुमेव भाष्यकारैरनुष्ठितम् ॥ 47 ॥
दृष्टान्तं सूचयन्नाह (अपराध) इत्यादिभिस्स्फुटम् । 'अहमस्मि' इत्यादिरीत्यापराधानिलयेन तु ॥
प्रपत्तेः क्रियमाणत्वात् प्रसन्नो भवतीश्वरः । अतस्सर्वापराधानां प्रायश्चित्तिरियं भवेत् ॥ 49
भाष्यकारोनुसन्धाय पूर्ववृत्तमनन्तरम् । 'अपराधे प्रपत्तिस्स्यादियं' इत्यनुचिन्त्य च ॥ 50 ॥
यथार्जुनः कृष्णगुणान्, बन्धान् स्वांश्च विचिन्तयन् । तथा तैरेव वचनैः क्षमामभ्यर्थयत् भृशम्
'प्रपत्तेरनिषिद्धत्वात्, प्रायश्चित्ताविधानतः, । सर्वापराधप्रायश्चित्तत्वात्, विधिबलादपि ॥ 52
वक्तव्यं नापराधत्वं ;तस्मिन् सत्यपि वत्सलः । ईश्वरस्सहते तस्मात् क्षामणं नोपपद्यते' ॥ 53
इति चेत्, ईश्वरस्सत्यं सहतेथापि चेतनः । पूर्ववृत्तमनुस्मृत्य क्षामणं कुरुतेशुचा ॥ 54 ॥
चिरायान्यपरा भार्या निस्त्रपा पतिसन्निधिम् । 'गत्वा, मां स्वीकुरुष्व' इति प्रसादं याचते यथा ॥
तथासौ चेतनश्चापि निर्लज्जो याचते प्रभुम् । पारतन्त्र्यं वहत्यस्मिन् ईश्वरः, तत् द्विधा भवेत् ॥
(I) आर्तेन न्यगतावस्मिन् शरणागतचेतने । कृपया निजया तस्मै इष्टवस्तुप्रदातृता ॥ 57 ॥
(II) कांश्चित् गृहीत्वा स्वातन्त्र्यात् तदिच्छानुसृतिस्तथा; ।
स्वातन्त्र्यं प्रथमं तत्र दुर्बलं कीर्तितं हि तत् ॥ 58 ॥
द्वितीयं तु भवेत् कामं प्रबलं च निरङ्कुशम् । एवं चान्येन वरणं वेदाभिमतमुच्यते ॥ 59 ॥
ईश्वरोसौ न तपसा न ध्यानेन न मेधया । किन्तु लभ्यो यमेवैष वृणुते तेन, निश्चितम् ॥ 60

'ननु अत्र स्मृतिसिद्धं तद्रक्ष्यापेक्षाप्रतीक्षणम् । वैषम्यमन्यथा तस्य नैर्घृण्यं च भवेत् प्रभोः' ॥
इति चेत् उच्यते ;नैव क्षतिर्वैषम्यतो हरेः । तदनभ्युपगच्छद्भिर्विध्वस्ताखिलकर्मणाम् ॥ 62 ॥
पत्नीपरिगनत्वादिवैषम्ये किं नियामकम् । निरङ्कुशप्रवृत्तेश्च प्रादेशिकतया तथा ॥ 63 ॥
उपासनादिविधयस्सकला न हि निष्फलाः । न वाच्या चेतनापेक्षाभावेस्यापुरुषार्थता ॥ 64 ॥
ईशस्यैव फलित्वेन चेतने तदसम्भवात् । 'गङ्गातीरं समासाद्य निरपेक्षं गुहं तथा ॥ 65 ॥

पम्पातीरं स्वयं गत्वा रामो जग्राह मारुतिम्' । इति रक्ष्यानपेक्षत्वगाथा श्रुतचरी ही सा ॥ ६६
यं यं पुरुषकारत्वे वृणुते चेतनस्स्वयम् । तं तमेव पुरस्कृत्य तमीशो रक्षति प्रभुः ॥ 67 ॥
एवं हि स्वीचकारायं मारुतिं विनयान्वितम् । गुहं च, रामो वैदेहीं पुरस्कृत्यैव तत्स्फुटम् ॥ ६८
तथा विभीषणं चापि तं स्वयं शरणागतम् । हनूमत्स्वीकृतौ सीता लङ्कायां स्थितवत्यपि ॥ ६९
कौशेयभूषणद्वारा समुपाकुरुत स्वयम् । विभीषणो हि सर्वांश्च न्यवेदयत मां इति ॥ 70 ॥
उवाच ;रामस्सुग्रीवं आनय इति त्विदं कथम् । इति चेत् ; कपिसङ्घस्य सुग्रीवे प्रभुतामयम् ॥
विचिन्त्योवाच तत् ; 'सर्वान् प्रत्युक्तिः' इति हि स्फुटम् । सरमामुखतस्सीता त्वन्वगृह्णाद्विभीषणम्
विना पुरुषकारेण द्वयोस्स्वीकारमर्हतोः ।पुरुषीकृत्य यं कञ्चित् स्वीकृतिस्तु, भवेत्तयोः ॥ 73
उभयोरपराधस्य शमनार्था ; न चान्यथा । (I) अपराधश्चेतनस्य तदाज्ञोल्लङ्घनादिकम् ॥ 74 ॥
(II) ईश्वरस्यापराधस्तु तस्मिन् दुष्टत्वधीर्मतः । सिद्धं स्वरूपमन्योन्यपारतन्त्र्यात्मकं तयोः ॥

आश्रितत्व-तदीयत्व-प्रयुक्तत्वादिदं भवेत् । औपाधिकं पारतन्त्र्यमीश-चेतनयोर्द्वयोः ॥ 76 ॥
तस्या उपाधेर्नित्यत्वात् नित्यमेतद्भवेत् स्फुटम् । तत्, कर्मपारतन्त्र्यञ्च विनश्यत्युभयोर्बलम् ॥
तच्चामुष्मिन् अवश्यानुभोक्तव्ये कर्मणि स्थितिः । ईश्वरे तु भवेत्तत्तत्कर्मानुगुणदण्डनम् ॥ 78
सम्बन्धोयं साक्षिपूर्वो द्वाभ्यां नापि प्रतार्यते । (I) 'देवी पुरुषकारेण मामगृह्णात् स्वयं यतः ॥
तत्, सर्वशक्तियुक्तोपि न त्यजेन्मां जगत्पतिः । (II)त्वां च देव्यामतिस्निग्धं मयि च स्वीकृते तया
कदाप्यहं न त्यजेयं' इत्युक्तं शठविद्विषा । शेषत्वप्रणयित्वाभ्यामागतश्चेतनेशयोः ॥ 81 ॥
कर्तृताया असङ्कोचो व्युत्पत्या कर्मनिष्ठया । स्मर्तव्य आगतः, सा च 'श्रीयते च' इतिरीतिका ॥
अधिकारित्रयस्यापि न त्याज्येयं पुरस्कृतिः । (I)अज्ञज्ञानाधिकात्यन्तभक्तास्तत्त्रयमीरिताः ॥83
(II) अथवा ऐश्वर्यकैवल्यभगवच्छरणार्थिनः । दुस्त्यजत्वं तद्गतये पुरस्कारानुपेक्षता ॥ 84 ॥
इत्थमुक्ते परगतस्वीयस्वीकारयोर्भृशम् । उपायत्वानुपायत्वे, पुरस्कारप्रयोजनम् ॥ 85 ॥
तदवश्यापेक्षितत्वं, तत्-प्राबल्यं च कीर्तितम् । एवञ्च पूर्वखण्डार्थो बहुशः प्रतिपादितः ॥ 86
यथागद्यानुसन्धानं नमश्शब्दार्थपूर्वकम् । शेषेणोत्तरखण्डार्थस्स्फुटं समभिधीयते ॥ 87 ॥
अथोपेयदशायाञ्च भृशं भवति निष्फलम् । शेषत्वोक्त्यादिनैच्यानुसन्धानं चात्मनस्तथा ॥ 88 ॥
'स्वतन्त्रोहमधीनस्तु न कस्यापि' इतिवत् स्फुटम् । स्तनावृत्त्यै धृतं स्त्रीभिरलङ्काराय कञ्चुकम् ॥
यथानायकभोगस्य, विरोधि स्यात्तथैव हि । भवेद्भोगविरुद्धं तत् शेषत्वं चेतनस्य च ॥ 90 ॥
" 'आलिङ्गनं विरोधि' इति हार एकोपि नार्पितः।सीतया निजकण्ठे हि" इत्याह स्म किल राघवः
हारार्पणे कर्तृता तु राघवस्यैव विद्यते । पुण्यं नैच्यानुसन्धानाद्बाधाभोगस्य बाधकम् ॥ 92 ॥
तथा भोगदशायां हि निर्व्यापारमचित्समम् । पारतन्त्र्यं भगवतो भोगरोधि भवत्यहो ॥ 93 ॥

अष्टप्रकरणात्मके प्रथमपरिच्छेदे अष्टमं प्रकरणं संपूर्णम् परिच्छेदश्च

अत्र केवलशेषत्वं पुण्यशब्दार्थ उच्यते । अथवा पुण्यशब्देन सत्कर्मैवाभिधीयते ॥ 1 ॥
तत् यथेशप्राप्तिरोधि, तथेयं परतन्त्रता । अतः केवलशेषत्वं पारतन्त्र्यञ्च सर्वदा ॥ 2 ॥

अन्योन्यरहितं स्याच्चेत् ईशभोगविरुद्धताम् । व्रजेदतः प्रपन्नानामुभयञ्च विवक्षितम् ॥ 3 ॥
शेषत्व-परतन्त्रत्वे यथा दुष्टे निरूपिते । तथा कथञ्चिन्निर्बध्य कृतं दुष्टं परं हि तत् ॥ 4 ॥
स्फुटं प्रकृतिसम्बन्धिदोषवारणमुच्यते । अत एव हि भोग्यस्स्यादीशस्य ज्ञानिविग्रहः ॥ 5 ॥
ज्ञानिप्राकृतदेहस्य भोग्यत्वं नोपपद्यते । 'प्रियो हि' इत्यात्मनः प्रीतिविषयत्वोक्तितस्स्फुटम् ॥ 6
इति चेन्नैव तद्युक्तं ; पत्रादिष्वपि वस्तुषु । ईदृ-प्रीतिविषयत्वोक्तेः, किंपुनर्न्यायतस्तथा ॥ 7 ॥
ज्ञानिदेहे प्राकृतेपि प्रीतिरीशस्य जायते । स्नातायै देहशुद्ध्यर्थं पत्न्यै रामश्चुकोप हि ॥ 8 ॥
'तथाभूतोपि पत्न्यां सः न भक्तविषये तथा' । इत्येवं तु न वक्तव्यं, 'त्वयि किञ्चित्' इतीरणात्
ईशायत्तं शठार्यादिमुनीनां देहवर्तनम् । न च 'आर्तिपूर्त्यभावात्' इत्येवं वाच्यं कदाचन ॥ 10॥
शठारेरार्तनादेन तरवोप्यरुदन् किल । तस्यार्तिपूर्तिसामान्यसद्भावादार्तिमत्तया ॥ 11 ॥
प्रारब्धनाशे जातेपि, ईडिच्छया देहवर्तनम् । 'सति प्रारब्धसामान्यनाशे, देहस्थितिर्न हि ॥ 12॥
प्रारब्धलेशसद्भावस्तद्वृत्तेरनुमीयते' । इतीर्यते यदि, तदा प्रारब्धानुमितिर्भवेत् ॥ 13 ॥
गत्यर्थसूक्ष्मदेहस्यानुवृत्तेरपि हि ध्रुवम् । 'सः प्रारब्धफलाभावात् प्रारब्धस्तत्र न' इतिचेत् ॥ 14
अत्रापि तदभवात् सा तुल्यैवानुमिति स्फुटम् । ज्ञानिदेहस्ततो भोग्यो यदद्याप्यनुभूयते ॥ 15 ॥
" 'सीतां स्नातामानय' इति स्वयमेव हि राघवः । विभीषणं प्रत्युवाच, कथं रोषस्समुद्भवेत्" ॥
इति चेत् उच्यते ; सोयं 'एवं वक्ष्याम सम्प्रति । एतत् सैव विजानीयात्' इत्यालोच्य तथावदत्॥
अन्यथा तु कथं रोषस्सञ्जायेत तथा च सा । स्नानं तु नैव कुर्वीत बहुधोक्तापि सर्वथा ॥ 18
" एवं 'आत्मज्ञानवतां देह ईशस्य भोग्यताम् । व्रजेत्' इत्यस्य कुत्रास्ते लक्ष्यं" इत्युच्यते यदि ॥
प्रकटीक्रियते तच्च शठकोपगिरा स्फुटम् । स्वविग्रहे भगवतोत्यादरं कलयन् हृदि ॥ 20 ॥

'दुष्टं स्वामिन् इमं देहं न भवान्नेतुमर्हसि' । इत्येवं बहुधोवाच स्फुटं वकुलभूषणः ॥ 21 ॥
उशीरामोदकामो हि शीतोशीरं समृत्तिकम् । 'मृदि प्रक्षालितायां तु गन्धस्य न्यूनता भवेत्' ॥
इत्येवं हृदि कृत्वा च शिरसि न्यस्यति स्वयम् । 'प्राप्तास्मि त्वां कदा कुत्र मया किं क्रियतां विभो
नार्हो देहमिमं धर्तुं' इत्यार्तेस्सुप्रकाशनात् । प्रारब्धकर्मदेहस्य स्थितिहेतुर्भवेन्न हि ॥ 24 ॥
अपि च श्रीवेङ्कटाद्रिश्रीवैकुण्ठादिके स्थले । ईशस्य यावान् कामोस्ति तथास्मिन् ज्ञानिविग्रहे ॥
एकैकेवयवेप्यस्ति सुमहानादरो हरेः । एतदङ्गीकारफला वेङ्कटाद्र्यद्यधिष्ठितिः ॥ 26 ॥
ईशस्य साधनं प्रोक्ता, साध्यं स्यात् गुणपूरिते । एतस्य हृदये वासः क्षेत्रस्थितिफलः परः ॥ 27
साध्ये चेतनहृद्वासे सिद्धे, साधनवस्तुनि । भवेदनादरस्तस्य साध्यं हि प्रबलं विदुः ॥ 28 ॥
वकुलालङ्कृतिमुनेस्सूक्त्या चैतत् स्फुटीकृतम् । भूतसूरिश्चेशमाह 'क्षीरधिं न त्यजेः' इति ॥
तस्मात्, ईशकृतज्ञत्वप्राप्यप्रीत्याश्रयत्वतः । तत्तेषु देशेष्वीशस्य प्रीतिरल्पापि जायते ॥ 30 ॥

दोषोत्सारणदुष्टत्वं, आदरो ज्ञानिविग्रहे, । साध्येस्मिन् अत्यादरश्च, साधने स्वल्प आदरः ॥
इत्येते बहुभिस्स्पष्टं कारणैः प्रतिपादिताः । 'स्वेन दोषनिवृत्तौ हि को दोषः' इति चेदिह ॥ 32
अयमेव परो दोषो नान्यो दोषोस्त्यतः परम् । तथाहि, कामिनी स्नाता भोक्तुकामा यथा भवेत्
तथागन्तुकदोषञ्चेत् वारयत्येष हि स्वयम् । पत्युर्यथानभिमतं तथेशानिष्टमेव तत् ॥ 34 ॥

अनिष्टमेव हीशस्य वस्तुदुष्टं निगद्यते । स्वभोगार्थं कृतं साधु कर्म स्येनैव यद्भवेत् ॥ 35 ॥
तदेतदेवं भवति - स्तनन्धयशिशोर्यथा । औपाधिकत्वादिदोषदुष्टं क्रीतपयोधिकम् ॥ 36 ॥
साधुकर्म त्वीशकृतं स्तन्यवत् प्राप्तमेव हि । "स्वयंस्वीकृत्यादयो न स्वरूपाप्राप्ततादिकाः ॥ 37
'कर्ता शास्त्रार्थवत्त्वात्' इत्यात्मार्हत्वात् भृशं तथा । ईशार्चनात्मकत्वेन स्वाभाविकतया युताः ॥
अपवर्गफलित्वेन सरसाश्च भवन्ति ते । स्वाधीनताबुद्ध्यभावतदायत्तत्वधी परा ॥ 39 ॥
कुरुकेशाचार्यसूक्तिः ; व्यर्थस्तद्विधिरन्यथा" । इत्येवं न च वक्तव्यं ; कुरुकेशार्यसूक्तितः ॥ 40
साधनान्तरदुष्टत्वमप्राप्तत्वादिभिर्भवेत् । साधनान्तरशास्त्रस्य विधिवैयर्थ्यशङ्कया ॥ 41 ॥
कुरुकेशाचार्यसूक्तेरन्योर्थोन समञ्जसः । 'नरस्य' इत्यादिभिस्तच्च ह्यज्ञमात्रस्य गोचरम् ॥ 42
'ईशमूलकसत्कर्मजातस्य स्तन्यतौल्यतः । न्यासादीनां हि सर्वेषां प्राप्तत्वं' इति चेन्न तत् ॥ 43
अन्यथा काम्यकर्माण्यप्युपादेयानि सर्वदा । 'तत्रेशस्यानुमन्तृत्वं न प्रवर्तकरा' इति चेत् ॥ 44
प्रवर्तकत्वं सर्वत्र कर्मणो ह्युररीकृतम् । ततोन्यगो हि स्वीकारः स्वरूपार्हो भवेदिह ॥ 45 ॥

एवं न्यासादियत्नानामुक्तञ्च तदपेक्षया । अत्यनिष्टानुबन्धित्वं ; चेतनापेक्षया पुनः ॥ 46 ॥
अनिष्टाननुबन्धित्वं बहुशः प्रतिपादितम् । अथानिष्टानुबन्धित्वं निजयापेक्षयोच्यते ॥ 47 ॥
एतद्विषयकं साधु कर्म तेनाकृतं यदि । अनेनैव कृतं स्यात्तत् औपम्यमधिरोहति ॥ 48 ॥
प्रजां पित्रोः करां नीत्वा सौनिकायार्पणेन हि । "न्यासादिस्वार्थयत्नानां बह्वनुष्ठानदर्शनात् ॥49
तद्योग्यतायास्सिद्धत्वात् स्वरूपानर्हता कथम् । स्वरक्षणे हि गीतायामुक्ता स्वस्यैव कर्तृता ॥ 50
'याने' इत्यादिगाथापि सर्वजीवपरा न हि । किन्तु नैच्यानुसन्धानरूपा शठजितो मुनेः ॥ 51 ॥
नित्यस्यात्मस्वरूपस्य नाशो वा कथमुच्यते" । इति चेदुच्यते यत्तु बह्वनुष्ठानदर्शनम् ॥ 52 ॥
मद्यपानाद्यनुष्ठानसमं प्रत्युत तद्भवेत् । 'उद्धरेदात्मना' इत्यादि शृण्वतस्तु किरीटिनः ॥ 53 ॥
दुःखाधिक्यस्य जातत्वात् नाशकत्वं दुरुद्धरम् । विनाशशब्दवाच्यं तु दोषदुष्टत्वमत्र हि ॥ 54
'एतज्जीवनहेतुत्वं ईशस्यैवास्ति चेदपि । तस्य प्रपत्त्याकृष्टत्वात् कर्तृत्वादस्य कर्षणे ॥ 55 ॥
स्वोज्जीवनेस्य हेतुत्वं दुर्वारं' इति चेन्न तत् । निरङ्कुशस्वतन्त्रेशवशीकरणकर्तृता ॥ 56 ॥
अत्यन्तपरतन्त्रस्य चेतनस्य न विद्यते । 'तस्य च' इत्यादिभाष्ये तु वशीकारो न चेदृशः ॥ 57
किन्तु स्वप्रातिकूल्याभिसन्धित्यागकवाचकः । नैतावता तस्य सर्वकर्माराध्यत्वविच्युतिः ॥ 58
शैषित्वयुक्तात् सौलभ्यात् तत्सिद्धेस्सहजाद्भृशम् । तस्मान्न्यासादिनिष्ठानां नाशकत्वं दुरुद्धरम्
ईश एनं जीवयितुं कालापेक्षिणि तिष्ठति । एतन्नाशे हेतुता तु कथं भगवतो भवेत् ॥ 60 ॥

अहङ्कारे च विषयेष्वादरस्स्वविनाशकः । अहङ्कारश्च देहात्मस्वातन्त्र्याभिरुचिर्मतः ॥ 61 ॥
विहिताश्च निषिद्धाश्च विषया [विषया] अमी । आत्मा च तदनन्यार्हशेषस्तद्भोग्य एव हि ॥
अग्निस्पर्शो यथाक्रम्य कुर्यात्तत्तद्विपर्ययम् । तथैवायमहङ्कारस्स्वरूपं नाश
'ममासक्तमिदं चेतः पादयोस्तव शेषिणः । श्रीवैकुण्ठादिकं ह्यन्यत् पुरुषार्थं न मन्यते ॥ 64॥
वैष्णवत्वं सदेच्छामि' इत्युक्तं किल ऋचि स्फुटम् । तत् 'मुक्तिश्च स्वभोगार्था त्याज्या' इत्येतदुदीरितम्
'महारथेन रामेण रहिताया ममाधुना । वसन्त्या अतिघोराणां राक्षसीनामिहान्तरे ॥ 66 ॥

भूषणैर्जीवितेनार्थैः न प्रयोजनमस्ति हि' । इत्याह स्म स्वयं सीता निराशा जीवितेपि च ॥ 67
तत् 'प्राणाश्च स्वार्थतया त्याज्या' इत्येतदीरितम् । 'सुखं सर्वाभिलषितं, देहं चाप्यथ जीवितम् ॥
आत्मानं च बहिर्भूतं नान्यत् शेषत्वसम्पदः । न सहे सर्वमेतच्च नाशं यातु सहस्रधा ॥ 69
इदं विज्ञापनं सत्यं' इत्युवाच हि यामुनः । तत्, शेषत्वाद्बहिर्भूतसर्वत्याज्यत्वमीरितम् ॥ 70
'मदुल्लासनिमित्तं च यो मोक्षः प्रतिपादितः । तदप्यहं न चापेक्षे' इत्याह स्म पराङ्कुशः ॥ 71
तस्मात् सर्वैः 'स्वभोगार्थं सर्वं त्याज्यं' इतीरितम् । वरणाधिकृतां साधनान्तरानर्हता न हि ॥
अहङ्कारविकस्यैतत्साधारण्येन सर्वदा । अन्योपायस्वस्वरूपनाशकत्वाद्यभावतः ॥ 73 ॥
उपायोपेययोः प्रार्थयिता हि वरणाधिकृत् । न च स्वातन्त्र्यशून्यस्य वरणे कर्तृता भवेत् ॥ 74
न फलासक्तिरहिताः फलयाच्ञां प्रकुर्वते । विषयासक्तिसामान्यं न स्वरूपविनाशकम् ॥ 75 ॥
निषिद्धविषयस्यैव नाशकत्वं विभाव्यते । इति चेदुच्यते योक्तात्यर्हतासाधनान्तरे ॥ 76 ॥
साह्यहङ्कारगर्भत्वात् नाशिनी नात्र संशयः । प्रयोज्यकर्तृतैवास्ति वरणाधिकृतो भृशम् ॥ 77 ॥
तस्मात् स्वातन्त्र्यगन्धोपि नास्ति प्रार्थयितुः स्वयम् । सौमित्रिणा स्वनाशस्य प्रार्थितत्त्वेन धीमता ॥
सर्वत्र प्रार्थना स्वार्था इत्येतन्न हि समञ्जसम् । त्याज्यं विषयसामान्यं न निषिद्धं तु केवलम् ॥
निषिद्धं विहितं वास्तु स्वोपयुक्तं परित्यजेत् । 'सीतया पतिविश्लेषदशायां जीवितादिभिः ॥ 80

अर्थाभावस्य चोक्तत्वात् तदन्यत्र प्रतीयते । स्वार्थत्वं' इति चेन्न ; अत्रार्थसामान्यं निषिद्ध्यते ॥
स्त्रीधर्मैकपरत्वेन तस्याप्रामाण्यमुच्यते । इत्येवं नैव वक्तव्यं ; विशुद्धात्मस्वरूपिणः ॥ 82 ॥
सीतासाम्यस्य वेदान्ताचार्यैः कण्ठोक्तितस्स्फुटम् । 'शेषत्वानुपयुक्तानां निवृत्तिप्रार्थनोक्तितः ॥83
ईट्शेषत्वोपयुक्तानां दुर्वारा साधुता' इति न । परोत्कर्षाधायकं हि शेषत्वं तदुदीर्यते ॥ 84 ॥
तत्, मोक्षत्वाद्यभावाच्च कैवल्यादियथातथा । विलक्षणमहामोक्षत्वाभावादिदमत्र हि ॥ 85 ॥
साधनान्तरसञ्जातं सायुज्यं त्याज्यतां लभेत् । अहङ्कारक्रूरतैवं स्फुटं संप्रतिपादिता ॥ 86 ॥
इदानीं विषयक्रौर्यं सप्रमाणं निरूप्यते । विलोमविषयस्पर्शो विषस्पर्श इवास्थितः ॥ 87 ॥
स चापि विषयस्पर्शो निषिद्धो नरकावहः । विषमिश्रान्नवत् योगोनुलोमविषयस्य हि ॥ 88 ॥
एषोनुकूलवत् स्थित्वा स्वरूपं नाशयेत् परम् । अग्निज्वालां यथातप्तस्तापशान्त्यर्थमिच्छति ॥
अत्याहितमसंभाव्यच्छायां नृत्यत्फणावतः । विश्रमाय यथेच्छेत, विषयेच्छा तथास्य हि ॥ 90 ॥

द्रवीभूतमनाः पक्षी गानाकर्णनतो भृशम् । क्रूरभेर्यादिनादेन यथा नष्टो भवेत्तथा ॥ 91 ॥
भगवद्गुणसंसक्त एष ह्यन्यपराङ्मुखः । एतद्दोषानभिज्ञोस्तु केवलं नास्तिका इव ॥ 92 ॥
अभिज्ञास्तु भवन्त्यत्रास्तिकनास्तिकवत् स्वयम् । उपदेशादिकैः पूर्वो निवर्त्यः कथमप्यसौ ॥ 93
कयापि तं ग्याघपरो न निवर्त्यः प्रयत्नतः । तस्य शास्त्रानभिज्ञत्वादुपदेशार्हता भवेत् ॥ 94॥
शास्त्रास्तिक्यं तत्प्रमेयं ज्ञात्वा चरति निर्भये । उपदेशाश्च किं कुर्युरस्मिन् गुरुमुखागताः ॥ 95
तत्, अज्ञो विषयासक्तो रञ्जनीयस्सुखं भवेत् । ज्ञानिनं विषयासक्तं ब्रह्मापि न हि रञ्जयेत् ॥ 96
स्वयं परं न नाशिन्यौ विषयाणां कृती इमे । किन्तु, भागवतानिष्टकारिण्यौ भवतो भृशम् ॥ 97
एतद्विरोधात्सञ्जातो बलीयानीशि निग्रहः । यो वैष्णवत्वचिह्नानि नामरूपाणि धारयन् ॥ 98 ॥

अहङ्कारी भागवतविरोधी च भवेत् सदा । स तु दग्धेन वस्त्रेण सदृशस्स्यान्न संशयः ॥ 99 ॥
दग्धः पटोऽदग्ध इव तिष्ठन् मरुति वाति हि । भृशं रजश्च यो भूत्वा प्रकीर्णो भवति स्फुटम्
'सङ्कल्पेनैव सर्वञ्च निर्वोढुं शक्त ईश्वरः । आच्छाद्य ब्रह्मरूपं स्वं चेतनस्सदृशस्स्वयम् ॥ 101
निकृष्टेष्वपि वंशेषु यत् प्रादुरभवत् स्वयम् । तत्तु भक्तेषु दुष्टानामपचारासहत्वतः' ॥ 102 ॥
'प्रीतिर्या मयि जाता सा मद्भक्तेषु यदा भवेत् । संहरेदखिलं लोकं तत् तेषामवमाननम्' ॥ 103
इति प्रोवाच भगवान् आश्वमेधिककर्मणि । जन्म,आकार,ज्ञान,वृत्ति,बन्धु,वास-निरूपणैः ॥
विविधत्वं भागवतापचारो वहतीदृशः । जनेर्निरूपणं नामाऽनालोच्यास्य गरिष्ठताम् ॥ 105 ॥
निकर्षबुद्ध्या तत्तेषां भवेज्जन्मनिरूपणम् । 'मुक्तेभ्यस्सनकादीनां तेभ्यः क्रतुभुजां ततः ॥ 106
रक्षोसुराणां' इत्येवं स्थावरान्तमनुक्रमात् । निकृष्टत्वं भवत्येव तन्न भागवते भवेत् ॥ 107
यस्मात् संस्थानमात्रेण निकर्षो मन्यते ततः । निरूपणे स्याद्दोषोस्मिन्नन्यरूपणतोधिकम् ॥ 108
ईशो हि वस्तु यत्किञ्चिदाश्रितानामभीप्सितम् । स्वीकृत्य विग्रहं, तस्मिन् स्पृहं कृत्वाधितिष्ठति
तदज्ञात्वाह्यपादानद्रव्यचिन्ता तु या भवेत् । तस्याश्चैतच्चिन्तनं स्यादतिक्रूरमनेकशः ॥ 110

क्रूरत्वं बाधकत्वं स्यात् बाधकत्वं तु सर्वथा । सर्वेश्वरस्य चात्यन्तं भवेन्निग्रहहेतुता ॥ 111
'उपादानस्मृतेः क्रौर्यं कियदस्ति' इति चेदिह । मातृयोनिपरीक्षाया यत्क्रौर्यं तन्निगद्यते ॥ 112
'अर्चावतारोपादान' इत्यादिवाक्ये किल स्फुटम् । यद्यप्युक्तमिदं क्रौर्यं वैष्णवोत्पत्तिचिन्तने ॥
तथापि तत्, उपादानचिन्तनस्य निदर्शनम् । भावस्तु वैष्णवोत्पत्तेः तत्क्रौर्यत्वस्य सूचकः ॥
'अति क्रौर्यं किं प्रमाणं' इति चेदुच्यतेधुना । उपादानस्मृतेः पूर्वनिपातस्तत्र दृश्यते ॥ 115 ॥
युक्तः पूर्वनिपातश्च सर्वत्राभ्यर्हितस्य हि । दोषस्याभ्यर्हितत्वं तु क्रौर्याल्पत्वं प्रकीर्त्यते ॥ 116
तस्मादल्पक्रूरतैवोपादानस्मरणस्य च । अन्यस्य तु भवत्येवात्यन्तक्रौर्यं हि सर्वथा ॥ 117 ॥
अपचारकृदेषोयं न परं दग्धवस्त्रवत् । अपचारे कृते सद्यः कर्मचण्डालतां व्रजेत् ॥ 118 ॥
त्रिशङ्कुर्नाम राजर्षिरिक्ष्वाकुकुलसम्भवः । गत्वा निजं कुलगुरुं वसिष्ठमृषिसत्तमम् ॥ 119 ॥
'सदेहस्वर्गलाभाय मां याजय गुरूत्तम' । इत्यापृच्छ्य वदत्यस्मिन् 'अशक्यं' इति चाथ सः ॥
उपेत्य तत्सुतानेवं प्रार्थयामास सत्तमम् ।'नः पित्रा यदशक्यं तत् किमस्माभिः करिष्यते ॥121
दुर्बुद्धे दूरतो गच्छ' इत्येवं तेषु वदत्सु च । 'वः पित्रा च भवद्भिश्च प्रत्याख्यातोभवं ततः ॥
आचार्यान्तरमेष्यामि' इत्येवं वदति राजनि । शेपुश्च ते सुसंक्रुद्धाः 'चण्डालस्त्वं भव' इति हि॥
चण्डालतामाप सद्यस्स वेषेण च कर्मणा । लोके कुलगुरोराज्ञां विना योन्यं गुरुं व्रजेत् ॥ 124
स याति सर्वथा कर्मचण्डालत्वं निरन्तरम् । यदान्यत्र गुरुर्गच्छेत्तथा तत्सुतमाप्नुयात् ॥ 125

तस्मिन्नपि गतेन्यत्र तद्बन्धूनयमाप्नुयात् ।
असत्सु तेषु विद्वांसं ज्ञानिनं समदर्शिनम् । अन्यं कञ्चिद्गुरुं यायात् विनीतो भक्तिमान् शुचौ ॥
कुलाचार्यस्त्वस्य कुलाभिमानी भवति स्फुटम् । प्रत्यग्रस्य गुरोरस्मिन् श्रयत्येव भवेद्दया ॥ 127
एवंभूतं गुरुं त्यक्त्वा तत्पुत्रांश्चैव धीमतः । यतोन्यं वरयामास तत एवास्य दुर्गतिः ॥ 128
विश्वामित्रप्रभावोपि यस्मिन् विफलतामगात् । गतिरस्ति परा जातिचण्डालस्य कदाचन ॥ 129

नैवाप्नुयादेव कर्मचण्डालः परमां गतिम् । भवत्पूर्ध्वारोहणस्य योग्यताधस्थितस्य हि ॥ 130
प्रासादात्पतितः कश्चिदतिध्वस्तकलेबरः । प्रासादं तमथारोढुं न समर्थः कथञ्चन ॥ 131 ॥
तथायं कर्मचण्डाल उच्चस्थानं गतः पुरा । ततस्तस्माद्भागवतत्स्वरूपान्निपपात हि ॥ 132 ॥
एतस्मिन् विषये नास्ति नियमो ह्यधिकारिणः। 'वेदानामपि चाध्येता तदीयश्रेष्ठ एव वा ॥133
तथैवोत्कृष्टजन्मापि त्वदीयपदपङ्कजे । एकाग्रचित्तं यो निन्देत् स चण्डालस्तदा भवेत्' ॥ 134
इति भक्ताङ्घ्रिरेणुश्च प्रोवाच किल गाथया । अधीत्य कौशिके विद्यां गालवो 'गुरुदक्षिणाम् ॥
स्वीकुरुष्व' इति निर्बध्नन् स रुषा गाधिसूनुना । शतान्यष्टौ हयान् देहि श्वेतान् श्यामश्रुतींस्तथा
इत्युक्तश्चिन्तयाविष्टस्सख्या ताक्ष्यै निवेदयन् । तत्-पक्षाभ्यां धृतश्चोर्ध्वं हयार्थं विचरन् पथि ॥
दृष्ट्वा तु शाण्डिलीं प्राज्ञां ववन्दे सखगाधिपः । अनेन सहितस्ताक्ष्यो विशश्राम तया धृतः ॥138
'शाण्डिलीयं महाप्राज्ञा वसत्यत्र सुदुर्गमे । कश्चिच्च वै तया दृष्टो देशः पुण्यो विलक्षणः॥139
नयाम्यन्यत्र यद्येनां, एतद्ज्ञानस्य तत् क्षमम्' । इत्येवं चिन्तयत्यस्मिन् ज्ञानिवासनिरूपणात् ॥

निर्दग्धाविव पक्षी द्वौ तत्क्षणादेव विच्युतौ । दृष्ट्वा तु गालवे 'स्वामिन् किमेतत्' इति पृच्छति
एतत्तस्मै व्यवहरन् 'क्षम्यतां' इति तां नमन् । प्रसाद्य तत्क्षणं प्राप पक्षौ द्वावपि पूर्ववत् ॥ 142
श्रीवत्सचिह्नमिश्रेषु शिष्यं स्वं जातिगर्वितम् । दृष्ट्वा, 'सर्वे हि दातारो, यत्किञ्चित्त्वं च देहि मे'
इति पृच्छत्सु तस्मिंश्च 'वः प्रदेयं किमस्ति मे । सर्वञ्च भवदीयं हि' इत्युक्तवत्यतिनम्रिते ॥144
अर्थवादस्स हि " 'मया नापचारः करिष्यते । वैष्णवे यत्रकुत्रापि वाक्कायेन हृदा तथा' ॥ 145
इति प्रतिज्ञा कार्या" इति गुरुणा बोधिते ततः । पूर्ववासनया ध्यात्वा दोषं माने ततस्तथा ॥
आचार्यसन्निधौ सर्वं विज्ञापयति तेऽब्रुवन् । 'शिष्य तेनुशयेनैव न क्रुध्येद्भवते हरिः ॥ 147 ॥
इतः परं वा कुत्रापि मापराधं च कुरु' इति । तत्, कृतेप्यागसि पुनः तमेव शरणं व्रजेत् ॥
ज्ञानानुष्ठानयुक्तं चापराधो नाशयेदसौ । 'प्रपन्नस्यापराद्धस्य लघुदण्डो भवेत्' इति ॥ 149 ॥
इदं न स्याद्भागवतापचारविषये पुनः । तत्र कैशिकवृत्तान्तो दृष्टान्तत्वेन संस्मृतः ॥ 150 ॥

तथाहि चरके वंशे जातः सोमाभिधः पुरा । ब्राह्मणो यष्टुमारभ्य यथावन्नाकरोद्यदा ॥ 151
तदैव ब्रह्मरक्षस्त्वं प्राप्य मार्गे चचार च । एवंसति कदाचित्तु श्वपाकः कश्चिदध्वनि ॥ 152
अध्यात्मभगवद्ध्यानजातबाष्पपरिप्लुतः । गच्छन् सिद्धाश्रमं वीणापाणिर्गातुं हरिं प्रभुम् ॥ 153
रक्षसा तेन दृष्टोयमुक्तश्च परुषं रुषा । 'किमरे वीतभीतिस्त्वं दृष्ट्वा मामपि गच्छसि ॥ 154
करे वीणां गृहीत्वा च स्रवद्बाष्पस्स्तुवन् हरिम् । कुत्र यासि ममेदानीं दूरीभूतं बुभुक्षया ॥ 155
यच्चिराय नराहारोत्कण्ठा मां पीडयत्यहो' । इदं वचस्समाकर्ण्य चण्डालः कृतनिश्चयः ॥156
'अहं सिद्धाश्रमे गातुं गच्छामि कमलापतिम् । कर्तुं तदेतत्सत्कर्म भवान् मां मोक्तुमर्हति ॥ 157
मयैव चेत्तेशनाया दूरीकार्या, ततो मया । वीणागानेन कृत्वाथ तुष्टं नारायणं भृशम् ॥ 158
आगत्येमं पुनर्देशं आमिषीभूयते तव' । इति विस्रम्भयंस्तं हि शपथैर्बहुभिस्तदा ॥ 159 ॥
गत्वाथ भक्तिसंयुक्तः कैशिकं स्वरमुत्तमम् । पुनरागम्य तं देशं 'भक्षयस्व' इति चाब्रवीत् ॥

स ब्रह्मराक्षसस्तस्य सत्यवादित्वमुत्तमम् । पश्यंस्तत्क्षणमेवास्य प्रभावात् ज्ञानसंयुतः ॥ 161 ॥
'देहि गीतफलं मह्यं मोक्ष्यसेस्माद्भयाद्ध्रुवम्' । इत्येवं प्रवदंश्चापि न तस्मात्फलमाप्तवान् ॥
यस्मात्साधनबुद्ध्या स न किञ्चित्कुरुते सुधीः । बहुशः प्रार्थ्यमानोपि नादत्त स यथा फलम् ॥
तदेव 'निग्रहादस्माद्रक्षोरूपाद्विमोचय' । इत्येवं ब्रह्मरक्षस्तत् चण्डालं शरणं ययौ ॥ 164 ॥
तदानीं सत्कुले जातो भक्तश्च समजायत ॥ 165 ॥
राजोपरि वसुर्नाम देवानां, व्योम्नि सञ्चरन् । मुनिभिश्च सुरैर्दृष्टस्संशयग्रस्तमानसैः ॥ 166 ॥
'अस्मद्यागीयसन्देहमपाकुरु सुराधिप' । इति पृष्टस्तदा राजा 'मतं किमुभयोः' इति ॥ 167 ॥
पप्रच्छ मुनयस्तावदब्रुवन्नुभयोर्मतम् । देवानां पक्षपाती स राजा शास्त्रं विदन्नपि ॥ 168 ॥
सुराणां मतमेवाह शास्त्रसम्मतमञ्जसा । तच्छ्रुत्वा मुनयस्सर्वे तमूचुः कुपितास्तदा ॥ 169 ॥
'यस्मात्त्वं पक्षपाती सन् अब्रवीरेयमन्यथा । तद्दिवःपतनो चेन्नः पतनं सम्भविष्यति' ॥ 170

तदा राजा मृषावादी विमानात् पतितोभवत् । तस्मादेवं विनश्येद्धि ज्ञानजन्माधिकोपि सन् ॥
जन्मादिमूलकोत्कर्षस्सरसो न कथं भवेत् । सर्वे च ब्राह्मणास्सत्यं सर्वदेवस्वरूपिणः, ॥ 172
सर्वैश्च देववत् पूज्याः, सुराणाञ्च सुरास्तथा, । न तेभ्यः कश्चिदधिकः,ते पूज्या ईश्वरेण च,॥
तथा तेषु कृतं सर्वमीश्वराय कृतं भवेत्, । तेषामकृत्यकरणं न दोषाय भवेत् स्फुटम्, ॥ 174
अपचारः कृतस्तेषु स्वरूपं नाशयेत् ध्रुवम्, । निन्दां यस्तेषु कुर्वीत सत्यं स शुनको भवेत्, ॥
ज्ञानी वा ज्ञानहीनो वा ते पूज्यास्सर्वथा जनैः । इत्याद्रियन्ते शास्त्राणि ब्राह्मण्यं इति चेत्तु तत् ॥
निगमाध्ययनद्वारा सत्यमेव प्रयोजकम् । तदेव यदि नाशाय भवेत्, त्याज्यं हि सर्वथा ॥ 177
'प्रयोजकं निकृष्टं हि जन्म' इत्येतदसङ्गतम् । निकृष्टजन्म चोत्कृष्टजन्माप्यत्राप्रयोजके ॥178
यथाहङ्कारहेतुत्वं श्रोत्रियत्वस्य सम्भवेत् । 'वयं त्वहङ्कारहेतु श्रोत्रियत्वादिदूरतः, ॥ 179 ॥
जन्मसिद्धं वहामोहि पारतन्त्र्यं वयं सदा । वयं वहामशुश्रूषां जन्मप्रभृति सुस्थिताम्, ॥ 180

वयं हि सर्ववर्णेभ्यो नीचा धर्मत एव च' । इति भागवतत्वादीनहङ्कारस्स्पृशेत्तथा ॥ 181 ॥
तदा भागवतत्वस्य त्याज्यत्वं सम्भवेत् ध्रुवम् । नाथादयश्श्रोत्रिया हि न काचित्तेष्वहङ्कृतिः ॥
अश्रोत्रियाश्च बहुशो निन्दां कुर्वन्ति सर्वदा । तन्न, 'श्रोत्रियता निन्दाहेतुरेव भवेत्' इति ॥
यद्यपि श्रोत्रियत्वं स्याद्भगवल्लाभकारि च ।तथापि देहस्य गुणत्रयवत्त्वात्ततो भृशम् ॥ 184 ॥
कर्ममूलकसत्त्वाभिवृद्धिजातशमादिभिः । यथास्य भगवल्लाभो नायासेन भवेत्तथा ॥ 185 ॥
रजस्तमोभिवृद्धिश्चेत् कदाचित् कर्ममूलतः । तदीयेष्वपचारादिद्वारा तत्प्राप्तिरेव न ॥ 186 ॥
तत्, यदा भगवल्लाभाभावस्याप्यस्ति योग्यता । तन्मात्रेणापि च ततो ब्राह्मण्यं त्याज्यमेव हि ॥
औपाधिकजनीनां हि त्याज्यता भवतीदृशी । तदभावो वक्ष्यमाणोत्कृष्टजन्मवतां भवेत् ॥ 188
यथा च राजते दीपः परीते तमसा गृहे । तथेश्वरस्य वात्सल्यसौशील्यादिगुणास्समे ॥ 189 ॥
दुष्टे स्थले विराजन्त इत्यस्मादेव कारणात् । 'निकृष्टत्वं तु तल्लाभप्रयोजकम्' इतीरितम् ॥
अहङ्काराय चेत्तत्स्यात् तर्हि न स्यात् प्रयोजकम् । 'प्रयोजकं न भवति द्वयं' इत्येतदीरितम् ॥
प्रयोजकं किं भवति इत्येवं चेदुच्यतेधुना । 'दृष्टद्वारा हेतुभूता ईशलाभस्य सर्वदा ॥ 192 ॥

तद्व्यापारफलीभूता स्वात्मात्मीया हि ये स्थिताः । शेषभूता भगवतस्ते नान्यस्य कदाचन' ॥
इत्येवं यद्भवेत् ज्ञानं तदेव स्यात्प्रयोजकम् । सर्वेषामस्ति तल्लाभ इदं ज्ञानवतां ध्रुवम् ॥ 194
इदमेवोच्यते ज्ञानमीशसम्बन्ध इत्यपि । तदभाववतां तु स्यात्तदलाभो न संशयः ॥ 195 ॥
ईशसम्बन्धरहितौ जन्मोत्कर्षनिकर्षकौ । अत्यन्तभगवल्लब्धौस्थितावप्यप्रयोजकौ ॥ 196 ॥
तत्-प्रयोजकसम्बन्धस्यैवेह सहकारिणौ । मतभेदेन लाभस्य यस्मात् स्यातां प्रयोजकौ ॥ 197
तस्मादिहेशसम्बन्धस्सिद्धोपायस्य तस्य हि । निर्हेतुककृपाधिक्यवशतश्चेद्ध
एकयोरुभयोर्जन्मसाम्याभावे हि भूरिशः । तदीयत्वेन रूपेण साम्यमस्त्युत नास्ति वा ॥ 199
अवरं च द्वयोरेको जन्मोत्कर्षमुपेयिवान् । जन्मोत्कर्षाभाववतो ह्यन्यस्मादधिकौ न वा ॥
इत्येवं पूर्वपक्षी चेत् पृच्छतीदमिहोच्यते । द्वावप्येतौ न हि समौ भवतः किन्तु सर्वदा ॥ 201
'अभिजातोस्म्यहं तस्मात् इत्यहङ्कारतो भृशम् । तदीयस्य त्वहङ्कारगन्धशून्यस्य सर्वदा ॥ 202 ॥
कृपावत्-भगवत्-पादपूजने निरतस्य च । एकान्तिनस्सदाचारनिष्ठस्य विषये भृशम् ॥ 203 ॥
वाचा कायेन मनसा बहुशश्चावमाननात् । ईशस्य वत्सलस्यापि भूरिशः कोपकारणात् ॥ 204
तथा सर्वजुगुप्साया विषयत्वादमुष्य च । कदाचिदपि तत्प्राप्तिकथाया विरहात्तथा ॥ 205 ॥

एतद्बन्धोश्च तल्लाभकथाशून्यत्वनिश्चयात् । उत्कृष्टत्वेनावबुद्धं जन्मेदं पूर्वपक्षिणा ॥ 206 ॥
'उपायान्तरसम्बन्धादधिकारादनुत्तमात् । च्युतिर्यदि भवेदत्र किं करिष्यामहे वयम्' ॥ 207 ॥
'अपि चान्योपायगन्धासहिष्णूनामपि स्वतः । भयदं हि' इति सर्वेषां भयस्य जनकं भवेत् ॥208
उपायान्तरगन्धस्यासहिष्णुत्वं भवेदिह । चेतस्स्मरण-तत्स्मर्तृसहवासासहिष्णुता ॥ 209 ॥
'स्वरूपोचितनैच्यं तु परैः कृतमपेक्ष्य हि । अनुकृत्य तथा भूम्ना भावनीयं' इतीदृशः ॥ 210॥
अन्योपि दोषोस्त्येतस्य पूर्वोक्तस्य हि जन्मनः । अविच्छेदं यावदात्मभाविनः, सम्मतस्य च ॥
कृपाधीनस्य, शत्रोश्चाहङ्कारममकारयोः । भृशं निवर्तकस्यापि पुण्यस्य वृजिनस्य च ॥ 212 ॥
निवर्तकस्यैव हेयवर्णाश्रममुखस्य च । दास्यैकव्यपदेशस्य हेतोर्भगवतः परम्, ॥ 213 ॥
औपाधिकोत्कर्षगन्धलेशराहित्यतो भृशम् । प्रष्टा 'निकृष्टं' इत्येक निश्चितस्यास्य जन्मनः ॥
'भ्रंशभावनया जाता भयोत्पादकता' इत्यसौ । 'स्वरूपागतनैच्यं तु भावनीयमिह इत्ययम्' ॥
द्वावेतौ प्रबलौ दोषौ न भवेथां हि सर्वथा । ततो जन्मेदमुत्कृष्टं कथ्यते सर्वकोविदैः ॥ 216
'अहं न कामये भूतिं ब्रह्मणोथ भवस्य वा । किन्तु सूर्यसुतातीरे कृष्णाधिष्ठितवृक्षताम्' ॥ 217
'यस्मिन् वसति देवेशस्सर्वलोकाभयप्रदः । मम कस्मिन् वेङ्कटाद्रौ मत्स्यत्वं स्तम्भता तथा ॥218
स्याच्चम्पकत्वमथवा यत्किञ्चित्त्वं भवत्विह' । 'स्वामिन् त्वद्दासभूतानां भवने कीटतास्तु मे' ॥
'न स्यां सुराणाममृतमत्तानां नन्दने वने । रङ्गेश त्वत्पुरे रम्ये रथ्यायां चरतां सदा ॥ 220 ॥

अहं शुनामन्यतमो भवेयं कृतिनामिह' । इत्थं हि भक्तिभूयिष्ठा आचार्याः पूर्विका भृशम् ॥
प्राहुरुत्कर्षहेतुत्वं तत्सम्बन्धस्य केवलम् । ततस्तदीयसम्बन्धमुत्कृष्टं विबुधा विदुः ॥ 222
'विष्णुभक्तश्वपाकस्य तद्विहीनद्विजस्य च । एतयोरुभयोः को वा श्रेष्ठः' इत्यत्र कथ्यते ॥223
विप्रायां शूद्रजातोपि द्विज इत्येव कथ्यते । तेनैव हेतुना सोयमहङ्कारपराजितः ॥ 224 ॥

